विभागः पुत्रैर्न कार्य्य इत्यर्थादुक्तं भवति। उक्तञ्चान्त्यपादेन मानवे, अनीशा स्तेहि जीवतोरिति। अनीशा अस्वतन्त्रा इत्यर्थः। तथाच शङ्खः, न जीवति पितरि पुत्रा ऋक्थं भजेरन् यद्यपि स्वाम्यं पश्चादधिगतं तैरनर्हा एव पुत्रा अर्थधर्म्मयोरस्वातन्त्र्यादिति। यद्यपि तैः पुत्रैः स्वकीयजन्मनः पश्चादनन्तरमेव, पितृधने स्वाम्यमधिगतं प्राप्तं तथापि जीवति पितरि नैव भजेरन् यतोऽर्थधर्म्मयोरस्वातन्त्र्यात् विभागकर्त्तृतायामनर्हाः पुत्रा इत्यर्थः। अर्थास्वातन्त्र्यं अर्थादानप्रदानयोरस्वातन्त्र्यम्। तथाच हारीतः। जीवति पितरि पुत्राणामर्थादानविसर्गाक्षेपेष्वस्वातन्त्र्यमिति। अर्थादानमर्थोपभोगः। विसर्गोव्ययः। आक्षेपो दासादिपरिजनस्यापराधेषु शिक्षार्थमाक्षेपः। अस्वातन्त्र्यं पितुरनुज्ञामन्तरेण स्वेच्छयार्थादानादावप्रवृत्तिः। धर्म्मास्वातन्त्र्यमप्येवं पृथगिष्टापूर्त्तादावप्रवृत्तिः। एवञ्च पित्रानुज्ञातेन पुत्रेण धर्म्मकर्म्माग्निहोत्रादिकार्य्यं नाननुज्ञातेनेति मन्तव्यम्।

यत्तु देवलोऽपि पितर्य्युपरते पुत्रा विभजेरन् पितुर्धनम्। अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थितइति। अत्रास्वाम्यवचनमस्वातन्त्र्यप्रतिपादनार्थमिति मन्तव्यं निर्दोषे पितरि स्थिते पितृधने पुत्राणां जन्मना स्वाम्यस्य लोकसिद्धत्वात्। नन्वलौकिकं स्वाम्यं न पुत्राणां लोकसिद्धमिति वृथैवास्वाम्यं हि भवेदिति वचनान्तरस्य भङ्गः क्रियते। नच वाच्यं प्रतिज्ञामात्रं लौकिकस्वाम्यमिति, यतो न्यायमाह संग्रहकारः. वर्त्तते यस्य यद्धस्ते तस्य स्वामी सएव न, अन्यस्वमन्यहस्तेतु चौर्य्याद्यैः किं न दृश्यते। तस्माच्छास्त्रतएव स्यात् स्वाम्यं नानुभवादपीति। यस्माद्यस्यान्तिके यद्धनं वर्त्तमानं दृष्टं तस्य सएव स्वामीत्यवधारयितुं न शक्यते परकीयस्यापि चौर्य्यादिना अन्यान्तिकस्यस्य दर्शनेन तस्यैव स्वामित्वापत्तेः। तस्मात्

शास्त्रैकसमधिगम्यं स्वाम्यं न प्रमाणान्तरसमधिगम्यमपीत्यर्थः। किञ्च यदि यस्यान्तिके यद्दृष्टं तस्य सएव स्वामी, तर्ह्यस्य स्वमन्येनापहृतमिति न ब्रूयात् यस्यैवान्तिके दृष्टं तस्य च स्वामित्वात्। अपिच प्रमाणान्तरगम्ये स्वाम्ये ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्दिष्टं वैश्यशूद्रयोरिरिति गौतमप्रणीते धर्म्मशास्त्रे यथाक्रमं वर्णानतिक्रमेण पृथक् पृथग् भिन्नप्रकारेण विहितोऽर्थागमो व्यर्थः स्यात् मानान्तरस्यैव नियामकत्वात् ।

एतद्बाधकद्वयमाह सएव, अस्यापहृतमेतेन न युक्तं वक्तुमन्यथा। विहितोर्थागमः शास्त्रे यथावर्णं पृथक् पृथक्। प्रतिग्रहाजिवाणिज्य शुश्रूषाख्या यथाक्रममिति। अस्येत्यादि वक्तुमित्यन्तेनात्र प्रथमबाधकमुक्तं, अवशिष्टेन व्यर्थः स्यादित्यध्याहारसापेक्षेण द्वितीयमिति मन्तव्यम् ।

एवञ्च स्वत्वमपि स्वाम्यवदेव शास्त्रैकसमधिगम्यं विज्ञेयं स्वाम्यस्वत्वयो स्तुल्ययोगक्षेमयोरेकतरमधिकृत्य साधितेऽपि शास्त्रैकसमधिगम्यत्वे, द्वयोरेव साधितत्वं भवति।

अतएव सम्प्रति स्वत्वमधिकृत्यापि शास्त्रैकसमधिगम्यत्वं द्वयोरेव साधयितुमाह सएव। नच स्वमुच्यते तद्यत् स्वेच्छया विनियुज्यते विनियोगोऽत्र सर्व्वस्य शास्त्रेणैव नियम्यत इति। अस्यायमर्थः न ब्रूमोऽन्तिके वर्त्तमानतया परिदृष्टं स्वमिति, किन्तु यद्वस्तु येन यथेष्टं विनियुज्यते तत्तस्य स्वमित्युचितं, ततस्य नातिप्रसङ्गादिदूषणम अपहृतादेरयथेष्टविनियोज्यस्य स्वव्यवहाराप्रसङ्गादिति : नच वाच्यं यतः सर्व्वस्य स्वव्यवहारविषयस्यापि धनस्य विनियोगः शास्त्रेणैव गुरुभृत्यादेर्भरणादौ नियम्यत इति। यथेष्टविनियोज्यं किमपि नास्ति प्रपञ्चितं चैतद्धारेश्वरसूरिणा।

तस्मात् अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थित इति धर्म-
त्वादस्वाम्ये सिद्धे यद्यपि पश्चादधिगतं तैरिति शङ्खवचनस्यैवा-
था व्याख्या न्याय्या। अत्रोच्यते न ब्रूमो यथेष्टविनियोज्यं
मिति किन्तु यथेष्टविनियोगार्हं स्वत्वमिति ब्रूमहे। ननु शास्त्रेण
भृत्यादेर्भरणादौ विनियोगनियमात् यथा यथेष्टविनियोज्यत्वं
र्निरूपं तथा यथेष्टविनियोगार्हत्वमपि यथेष्टविनियोगाभावादेव
र्निरूपं, मैवं यथेष्टविनियोगाभावेऽपि यद्येनार्ज्जितं तत्तस्य
ष्टविनियोगार्हमित्येवं निरूप्यते। तथाच न्यायविवेके भव-
थैनैव निरूपितं तच्च तस्य तदर्हं यद्येनार्ज्जितमिति ग्रन्थेन,
ायमर्थः। यद्वस्तु येन पुरुषेणार्ज्जितं तद्वस्तु तस्य पुरुषस्य
र्हं यथेष्टविनियोगार्हमिति स्वत्वनिरूपणवद्यथेष्टविनि-
गार्हत्वनिरूपणञ्चास्मन्मते सुशक्यमिति शब्दार्थः। नन्वेवं
रस्य चौर्य्यार्जितं यथेष्टविनियोगार्हं स्यादित्याशङ्क्याह
व, लौकिकमिदञ्चार्जनं जन्मादीति। जन्मक्रयसंविभाग-
रग्रहाधिगमाद्येव अनिदं प्रथमलोकसिद्धमर्जनमेव स्वत्वापादकं
पुनश्चौर्य्यादिकमित्यर्थः। अतिप्रसङ्गपरिहारोऽपि सुशक्य
ते च शब्दार्थः। नन्विदमर्जनमनिदं प्रथमलोकसिद्धमिद मित्यत्र
नियामकमित्याशङ्क्याह स एव, अतएवानिदं प्रथमलोक-
षय इत्यव्यवस्थितनिबन्धनार्था स्मृतिः, व्याकरणादिस्मृतिवदिति।
यतएवानिदं प्रथमलोकसिद्धार्जनमेव स्वत्वापादकं ततश्च
व लौकिकवैदिकस्वव्यवहारसिद्ध्यर्थ मवश्यं ज्ञेयम् अतएवानिदं
मलोकधीगोचरतया व्यवस्थितार्ज्जनानां स्वग्रन्थे निबन्धनार्था
तः स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु, ब्राह्मण-
धिकं लब्धं क्षत्रियस्य विजितं निर्दिष्टं वैश्यशूद्रयो रित्यादिका

साधुशब्दनिबन्धनार्थव्याकरणस्मृतिवत् क्रतेत्यर्थः। रिक्थं रिक्थार्ज्जनं, पित्रादिधने स्वामित्वापादकं पुत्रादिजन्मेति यावत् तथाच पैतृकधनलाभहेतुत्वेनोक्तं गौतमेन उत्पत्त्यैवार्थं स्वामित्वात् लभेत इत्याचार्य्या इति। उत्पत्त्यैव मातृगर्भे शरीरोत्पत्त्यैवेत्यर्थः। क्रयः प्रसिद्धः, संविभागः पित्रादिधने विशेषनिष्ठस्वामित्वसम्पादको विभागः। परिग्रहः काननाधिगतजलतृणकाष्ठादेरन्येनास्वीकृतस्य स्वीकारः। अधिगमो निध्यादेरुपलब्धिः। एतेषु निमित्तेषु सत्सु, पुत्रादिः क्रेता संविभक्ता परिग्रहीता अधिगन्ता च यथाक्रमेण पित्रादिधनस्य क्रीतस्य संविभक्तांशस्य परिगृहीतस्य-अधिगतस्यच स्वामी भवति। तथा लब्धं परिगृहीतं ब्राह्मणस्याधिकं प्रातिस्विकमर्ज्जितम्। एवं क्षत्रियस्य विजितं विजयलब्धम्। एवं, वैश्यस्य निर्द्दिष्टं कृष्यादौ भृतिरूपेण लब्धम्। शूद्रस्यापि निर्द्दिष्टं द्विजशुश्रूषादौ भृतिरूपेण लब्धं प्रातिस्विकमर्ज्जितमित्येव मर्जननिबन्धनाया गौतमस्मृते रर्थो विज्ञेयः। एवञ्च यत् संग्रहकारेणोक्तं वर्त्तते यस्य यद्धस्ते इत्यादिना, यच्च धारेश्वरसूरिणा प्रपञ्चितं तत् सर्व्वमपास्तं वेदितव्यम्। ततश्चास्वाम्यं हि भवेदेषां निर्द्दोषे पितरि स्थित इति वचनस्यैव शङ्खवचनविरोधपरिहारो युक्त एवेत्यलमतिवक्तुना।

प्रकृतमुच्यते। निर्द्दोषग्रहणात् पितरि सदोषे स्थितेऽपि सति पुत्राणां न तत्पारतन्त्र्यमिति दर्शयति। तेन पितरि स्थिते व्यासक्तत्वादिदोषे मर्य्यादादानविसर्गादौ ज्येष्ठस्य स्वातन्त्र्यादनुज्ञायाञ्च ज्येष्ठाधीनत्वमवगन्तव्यम्। अतएव शङ्खलिखिताभ्यामुक्तम्। पितर्य्यशक्ते कुटुम्बव्यवहाराञ् ज्येष्ठः प्रतिकुर्य्यादनन्तरो वा कार्य्यज्ञ स्तदनुमतेनेति, तदनुमतेन ज्येष्ठानुमतेन तदानीं तस्यैव स्वातन्त्र्यात्

तदनन्तरग्रहणमनुजोपलक्षणार्थं कार्य्यज्ञस्यैवात्र विवक्षितत्वात्। अशक्तग्रहणञ्च दीनादेरुपलक्षणार्थम् अतएव हारीतः। कामं दीने प्रोषिते आर्त्ते गते वा ज्येष्ठोऽर्थांश्चिन्तयेदिति। दीन इत्यादौ जीवति पितरीति पदद्वयमनुषज्यते तस्य पूर्व्ववाक्ये श्रवणादिहाकाङ्क्षितत्वात्। काममिति वदन् पितृपरतन्त्रत्वं तदानीमपगतमिति दर्शयति गतेच पितृपरतन्त्रत्वे पुत्राणां पितृधनविभागकर्त्तृत्वार्हता जातेति पितृधनविभागोऽपि तदानीं पुत्राणामेवेच्छया भवितुमर्हति। अतएव शङ्खः अकामे पितरि रिक्थविभागो वृद्धे विपरीतचेतसि दीर्घरोगिणि चेति। अकामे पितरि विभागेच्छाशून्ये पितरीत्यर्थः, वृद्धे अतिवृद्धे, विपरीतचेतसि अप्रकृतिस्थे, एतदुक्तं भवति वार्द्धक्यादिना पितर्य्यस्वतन्त्रतामापन्ने तदनिच्छया पितृधनविभागः पुत्राणामिच्छयैव भवतीति। दीर्घरोगग्रहणं दीर्घकोपादेरुपलक्षणार्थम्। अतएव नारदः। व्याधितः कुपितश्चैव विषयासक्तमानसः। अन्यथाशास्त्रकारीच न विभागे पिता प्रभुः, अपितु तत्पुत्रा एव प्रभव इति शेषः। अन्यथाशास्त्रकारी स्मृत्याचारव्यपेतमार्गवर्त्ती।

निर्द्दोषे पितरि स्थितेऽपि क्वचिद्विषये पुत्रकर्त्तृकविभागमाह सएव। अतऊर्द्धं पितुः पुत्रा विभजेरन् धनं समम्। मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च। निवृत्ते वापि रमणात् पितर्य्युपरतस्पृहइति। यद्यपि अतऊर्द्धमित्यादि सममित्यन्तमाद्यवाक्यमजीवद्विभागकालादिबोधनार्थं तथाप्युत्तरवाक्यपूरणोपयोगार्थं पठितम्। पित्रोरपत्योत्पत्तिसामर्थ्याभावनिश्चये अपत्यविवाहकृत्ये च कृते पितुर्द्धनास्पृहायां पुत्रा एव विभजेरन्निति द्वितीयवाक्यस्यार्थः। बौधायनः। पितुरपि कर्त्तृत्वमनुमतिद्वारे-

णाह पितुरनुमत्या दायविभाग इति। कथं तर्हि पितृकर्त्तृको विभाग इत्यपेक्षिते नारदः। पितैव वा स्वयं पुत्रान् विभजेद्वयसि-स्थित इति। वयसिस्थित इति वदन्नप्रतिहतस्वातन्त्र्ययुक्तपितृविषय एवायं नियम इति दर्शयति। अदिकारेण पितृकर्त्तृकत्वनियम-लाभेऽपि स्वयंग्रहणादस्मिन् विषये पुत्राणामनुमतिकर्त्तृत्वमपि निरस्तम्। वा शब्दः सहवासेन विकल्पार्थो न पुनः पुत्रादि-कर्त्रन्तरेण, सहवासस्यैवात्र पक्षान्तरत्वात्, तथाच व्यासः। भ्रातृणां जीवतोः पित्रोः सहवासो विधीयतइति।

पितुरूर्द्ध्वमपि भ्रातृणामन्योन्यमर्थोपचयार्थं सहवासोऽस्त्येव। तथाच शङ्खलिखितौ। कामं सह वसेयुरेकमताः संहता वृद्धिमा-पद्येरन्निति। पृथक् पृथक् व्ययाभावादिति भावः। विभागेतु धर्म्मवृद्धिमापद्येरन्ननुमत्याह गौतमः। विभागेतु धर्म्मवृद्धिरिति। कथमित्यपेक्षिते नारदः। भ्रातृणामविभक्ताना मेको धर्म्मः प्रव-र्त्तते। विभागे सति धर्म्मोहि भवेदेषां पृथक् पृथगिति।

धर्म्मः पितृदेवद्विजार्चनजन्यः। तथाच वृहस्पतिः। एक-पाकेन वसतां पितृदेवद्विजार्चनम्। एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे। नन्वग्निहोत्रादिजन्योऽपि धर्म्मो विभक्तानां वर्द्धते नाविभक्तानां स्वत्वाभावेन, विभक्तानां स्वसाध्याग्निहोत्रादिधर्म्मोऽपि विभागपक्षोत्कृष्टत्वे हेतुतया वक्तव्यः। उक्तञ्च तथैव संग्रह-कारेण। क्रियते स्वं विभागेन पुत्राणां पैतृकं धनम्। स्वत्वे सति प्रवर्त्तन्ते तस्माद्धर्म्माः पृथक्क्रियाः। प्रवर्त्तन्ते स्वसाध्याग्नि-होत्रादय इति शेषः।

अत्रोच्यते पैतृकं धनं विभागेन पुत्राणां स्वं क्रियत इत्येतद-नुपपन्नं जननेनैव स्वं क्रियतइति प्रागेव प्रतिपादितत्वात्,

ततश्चाविभक्तानां स्वत्वमस्तीति स्वसाध्याग्निहोत्रादिजन्यो धर्म्मः सम्पद्यतएवेति न कश्चिद्विभागपक्षस्याविभागपक्षाद्विशेष इति पूर्व्वोक्त प्रकारेणैव विभागपक्षे धर्म्मवृद्धिं गौतमादिभिरुक्तेति दिक्।

इति स्मृतिचन्द्रिकायां विभागकालकर्त्तृप्रतिपादनम्।

अथ जीवद्विभागप्रकारः।

तत्र शङ्खलिखितौ।

जीवति वा पितरि रिक्थविभागोऽनुमतः प्रकाशं वा मिथोवा धर्म्मत इति। यो जीवद्विभागपक्षोऽनुमतः स तावत् प्रकाशं बन्ध्वादिसमक्षं यथा भवति तथा मिथो वा रहसि वा धर्म्मतो धर्म्मादनपेतेन प्रकारेण कार्य्य इत्यर्थः।

तमेव प्रकारमाह कात्यायनः। सकलं द्रव्यजातं यद्भागै र्गृह्णन्ति तत्समैः। पितरौ भ्रातरश्चैव विभागो धर्म्म्य उच्यते। यन्मध्यगं द्रव्यजातं तत् सकलं पित्रादयो यत्र विभागे समैरेव भागै र्गृह्णन्ति स विभागः शास्त्रावगतत्वात् धर्म्मादनपेत इत्युच्यत-इत्यर्थः।

ज्येष्ठभ्रातु र्भागाधिक्येन विभागान्तरतो धर्म्म्यं विभागं वक्तुं बौधायनेनोक्तम्। पुत्रेभ्यो दायं व्यभजदिति। समो ऽंशः सर्व्वेषा मविशेषादिति। मनुः। पुत्रेभ्यो दायं व्यभजदिति जीवद्विभागाभिधायके ब्राह्मणे भागविशेषानभिधानात् समं स्याद-

श्रुतत्वादिति न्यायबलेनास्मादेव शास्त्रात् सर्व्वेषां पिता पुत्राणां सम एवांशो ऽवगम्यत इत्यर्थः। ज्येष्ठत्वादाधिक्यं श्रुत्यन्तरमित्याह स एषां धनमेकमेकमुद्धरेज्ज्येष्ठः तस्माज्ज्येष्ठपुत्रं धनेन निरवसाययतीति श्रुतिरिति धनमेकमेकमिति वदन् धनेनेत्येकवचनं श्रुतिवाक्यगतं विवक्षितमिति दर्शयति निरवसाययतीति तोषयतीत्यर्थः। तथाचापस्तम्बः, एकधनेन ज्येष्ठं तोषयित्वा जीवन् पुत्रेभ्यो दायं विभजेत् सममिति। जीवन् पिता श्रेष्ठेनैकेन धनेन मध्यगद्रव्यादुत्कृष्टतरेण ज्येष्ठं प्रथमपुत्रं तोषयित्वा ऽवशिष्टमात्मसहितज्येष्ठादिपुत्रेभ्यः समत्वेनैव विभजेदित्यर्थः।

एवञ्च प्रथमोत्पन्नतया तदर्थमेवोद्धारः स चैकस्यैव सर्व्वधर्म्मज्येष्ठस्य, उद्धृतावशिष्टस्य समत्वेनैव विभाग इति विधानान्तरमुक्तमित्यवगन्तव्यम्। एवं कात्यायनबौधायनोक्तेऽप्युभयो र्मध्ये यं पक्षं पिता कर्त्तुमिच्छति तमेव पक्षं कुर्य्यात् पितृकर्त्तृकेऽपि विभागे तस्यैव प्रभुत्वेन तदिच्छायाएव पक्षविशेषपरिग्रहकारणत्वात्।

तदेतत् सर्व्वं संक्षिप्य याज्ञवल्क्येनोक्तम्। विभागञ्चेत् पिता कुर्य्यादिच्छया विभजेत् सुतान्। ज्येष्ठं वा श्रेष्ठभागेन सर्व्वे वा स्युः समांशिन इति। अत्रोत्तरार्द्धेन प्राङ्निरूपितपक्षद्वयं पूर्व्वोक्तक्रमव्यत्यासेनोक्तम्। तयोरन्यतरपक्षपरिग्रहे पितुरिच्छैव कारणं न पुनः पुत्राणामिच्छापि कारणमिति पूर्व्वार्द्धेनोक्तमिति मन्तव्यम्।

एवञ्चात्मेच्छया यः पक्षः पित्रा परिगृहीतः स सुतैरनपेक्षितोप्यनुमन्तव्य एव। तथाच सएव। न्यूनाधिकविभक्तानां धर्म्म्यः पितृकृतः स्मृत इति। न्यूनतया ये विभक्ता अज्येष्ठा स्तेषां श्रेष्ठभागाभावादधिकतया विभक्ता ज्येष्ठा स्तेषां पितुरिच्छया स्वीकृतो

यद्युद्धारपूर्व्वको विभाग स्तदा सोऽपि शास्त्रमूलत्वेन तद्धर्म्मतया प्राक् स्मृत इति तैरप्यनुमन्तव्य इत्यर्थः। नारदोऽप्यमुमेवार्थमाह। पित्रैव तु विभक्ता ये समन्यूनाधिकै र्धनैः। तेषां सएव धर्म्मः स्यात् सर्व्वस्य हि पिता प्रभुरिति। समधनैः कृतो यो विभागप्रकारः तत्र पित्रा मह्यमेकमधिकं श्रेष्ठं धनं न दत्तमिति ज्येष्ठेनानुशयो न कार्य्यः, तथा यः पित्रा कृतो न्यूनाधिकधनैर्व्विभाग स्तत्र पित्रास्मभ्यं न्यूनं दत्तं ज्येष्ठायाधिकमिति अनुजैरनुशयो न कार्य्यः पितुरिच्छया प्राप्तस्यैवात्र धर्म्मत्वात्। कुतस्तस्यैव धर्म्मत्वमित्यपेक्षिते इत्युक्तं सर्व्वस्य हि पिता प्रभुरिति सर्व्वविधस्य पितृकर्त्तृकविभागस्य यतः पितैव प्रभुरित्यर्थः।

ये पुनर्द्धर्म्म्यं विभाग मतिक्रामन्ति ते दण्ड्याः। यथाह बृहस्पतिः समन्यूनाधिका भागाः पित्रा येषां प्रकल्पिताः, तथैव ते पालनीया विनेया स्ते स्युरन्यथा। पित्रा शास्त्रावगतप्रकारेणेति शेषः। प्रकारान्तरेण कल्पितानाम् अधर्म्मत्वेनापालनीयत्वात्। नहि स्वेच्छयैव स्वार्ज्जितधनेऽपि कस्यचित् पुत्रस्य निष्कसहस्रेण कस्यचित् पुत्रस्य कपर्द्दिकामात्रेण विभागः कृतो धर्म्म्यो भवितुमर्हति। अनिदं प्रथमविभागस्यैव स्वस्य व्यवस्थापकत्वात्। नच इच्छया विषमविभागोऽनिदं प्रथम एव इच्छया विभजेत् सुतानिति निबद्धत्वादिति वाच्यं अस्याः स्मृते स्तथाविधविभागानिबन्धकत्वात। तथाहि स्वत स्तावदयुक्तत्वेऽपि यदपरार्केणास्याः स्मृतेः परिशेषात् तथैव विभागप्रतिपादनपरत्वमापादितं तत् प्राक् प्रतिपादित सम्यगर्थसद्भावे सति अपास्तमिति। स्वेच्छामात्रेण, पित्रा स्वार्जितधनेऽपि कृतो विषमविभागः पुत्रैरनुशये सत्यपालनीय इति सिद्धम्।

यत् पुनरपरार्केणोक्तं ज्येष्ठं श्रेष्ठभागेनेत्येतदुद्धारेण प्रदर्शनार्थं तेन ज्येष्ठस्य विंश उद्धार इत्यादिभिर्मन्वादिशास्त्रैः यावन्त उद्धारप्रकारा विहिता स्ते सर्व्वे चोपलक्षिता भवन्तीति तदप्यपास्तम्। तमेकमेकमुद्धरेज्ज्येष्ठ इति जीवद्विभागोक्तोद्धारविशेषपरत्वस्यैव न्याय्यत्वात्।

वृद्धवृहस्पतिस्तु पितु र्भागाधिक्येन प्रकारान्तरमाह। जीवद्विभागेतु पिता गृह्णीतांशद्वयं स्वयमिति। पिता विभजन्निति शेषः। तथाच नारदः। द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पितेति। विभजन्निति वदन् पितृकर्त्तृके जीवद्विभागे भागद्वयमात्मनो न पुत्रकर्त्तृके जीवद्विभाग इति दर्शयति। पितृकर्त्तृके विभागे प्यात्मनो भागद्वयग्रहणे विशेषमाहतुः शङ्खलिखितौ। स यद्येकपुत्रः स्यात् द्वौ भागावात्मनः कुर्य्यादिति। स इति प्रकृतः पिता प्रत्यवमृश्यते। एकपुत्रः स्यादिति अतिक्रान्तपुत्रलाभकालः स्यात् गलितवयस्कः स्यादिति यावत्।

अतएव बहुपुत्रसद्भावविषयेऽपि गलितवयस्कस्य हृष्टभागग्रहणेन पिता पुत्राणां भागवैषम्यमाह हारीतः। जीवन्नेव वा विभज्य वनमाश्रयेत् वृद्धाश्रमं वा गच्छेत् स्वल्पेन वा संविभज्य भूयिष्ठमादाय वसेत् यद्युपदस्येत् पुनस्तेभ्यो गृह्णीयात् क्षीणांश्च विभजेदिति। स्वल्पेन भागेनात्मीयभागार्धप्रमाणकेन पिता पुत्रान् विभज्य द्वैगुण्येन भूयिष्ठभागं स्वयमादाय गृहएव वसेत् एवं वसन् यदि कथञ्चिदुपदस्येत् अशनाद्यभावेन क्षीणः स्यात् पिता तदा तेभ्यः पुत्रेभ्यः स्वदत्तभागवशात् उपचितद्रव्येभ्यः सकाशात् स्वकुटुम्बभरणपर्य्याप्तं धनं पुन र्गृह्णीयात्, अथ पुत्रा एव अशनाद्यभावेन क्षीणा स्तदा तान् पुनः पूर्व्ववद्विभजेदित्यर्थः।

वनमाश्रयेत् वानप्रस्थः स्यात्। वृद्धाश्रमः चतुर्थाश्रमः। वृद्धाश्रममिति वदन् गलितवयस्कविषयमिति दर्शयति एवञ्चापरवयसि पुत्राश्रयार्थत्वात् यथा पिता पुत्रं क्षित उपधावति तादृगेव तदिति श्रुतिविषयत्वं पितुर्युक्तं स्वल्पभागग्रहणात् यथा पुत्रः पितरं क्षित उपधावति तादृगेव तदिति श्रुतिविषयत्वं पुत्रस्य युक्तमित्यभिसन्धायैव यद्युपदस्येदित्यादिना यथा पिता पुत्रं तथा पुत्रः पितरम् इत्यादि श्रुतिद्वयार्थ उक्त इति मन्तव्यम्। अतएव पुनस्तेभ्यो गृह्णीयात् क्षीणांश्च विभजेदिति स्वकीयस्मृत्यो रेवंविध श्रुतिमूलत्वं दर्शयितुं एतत् समानार्थं श्रुतिद्वयं प्रतीकेन तेनैव दर्शितम्। अथाप्यत्र ग्रहोपादानोपाधिकश्रुतिमुदाहरन्ति। पिताग्रेणः पुत्रा इतरे ग्रहाः, यद्याग्रेणः स्कन्धादुपवादस्येत् इतरेभ्यो गृह्णीयात् यदीतरे ग्रहाः स्कन्देयु रुपदस्येयु र्वेति व्याख्यातमिति। ग्रहोपादानोपाधिकीं सोमग्रहविशेषसमाधाक्रियां आग्रेणः सोमग्रहविशेषः। इतरे त्वाग्रेणव्यतिरिक्ता ग्रहाः ऐन्द्रवायव्यादयः। उपवादस्येत् उपदस्येद्वा शुष्येतेति यावत्। स्कन्देयुरिति लकारोऽत्रावशिष्टश्रुतिभागप्रतीकार्थः। व्याख्यातप्रतीकेन प्रदर्शितश्रुतिभागस्य व्याख्या कृतास्माभि र्यद्युपदस्येत् पुनस्तेभ्यो गृह्णीयात् क्षीणांश्च विभजेदिति वाक्यद्वयेनेत्यर्थः।

अत्रापि पितुरिच्छया समविभागः पक्षे कार्य्यः। सकलं द्रव्यजातं यद्भागे गृह्णन्ति तत्समैः। पितरौ भ्रातरश्चैव विभागो धर्म्य उच्यते इति जीवद्विभागं वदता कात्यायनेन समविभागपक्षस्यासार्व्वत्रिकत्वेनाभिधानात् तेनात्र विषये स्वकीयेच्छया पिता समविभागपक्षं कुर्य्यात् तदात्वाह याज्ञवल्क्यः यदि कुर्य्यात् समानांशान् पत्न्यः कार्य्याः समांशिकाः, न दत्तं स्त्रीधनं यासां

भर्त्रा वा श्वशुरेण वेति। वार्द्धक्ये पात्मना सह समविभागपक्ष-मिच्छया पिता कुर्य्यात्तदात्मभागेन सह तत्समानभागं प्रतिपत्नि गृह्णीयादित्यर्थः। एवञ्च जायापत्योर्न विभागो विद्यत-इति हारीतवचनविरोधशङ्कापि परिहृतेति सर्व्वमनवद्यम्।

यत्र पुत्रस्य पितृधने धनार्ज्जनसमर्थतया स्वांशं ग्रहीतुं नेच्छा तत्र यावत् स्वीकरोति तावत्तस्मै दत्त्वा पित्रा पृथक्क्रिया कार्य्ये-त्याह स एव। शक्तस्यानीहमानस्य किञ्चिद्दत्त्वा पृथक्क्रियेति। यदा पुनर्जीवति पितरि पुत्रकर्त्तृको विभागः क्रियते तदा सकलं द्रव्यजातमित्यादि कात्यायनवचनोक्त समविभागप्रकारेणैव कार्य्यः पुत्रकर्त्तृके जीवद्विभागे प्रकारान्तरप्रतिपादक शास्त्रा-न्तराभावात् पितुः पुत्रा विभजेरन् धनं सममित्यनुवृत्तौ मातु-र्निवृत्ते रजसीत्यादिना समविभागनियमस्य नारदोक्तस्य पूर्व्व-प्रकरणे पुत्रकर्त्तृकजीवद्विभागाभिधानावसरे दर्शितत्वाच्च।

इति स्मृतिचन्द्रिकायां जीवद्विभागप्रकारः।

---

अथ अजीवद्विभागप्रकारः।

अथाजीवद्विभागे समविभागप्रकारः।

तत्र पितरीत्यनुवृत्तौ हारीतः। समानो मृते त्वपृथ-विभाग इति। मृते पितरि भ्रातृभिः क्रियमाण त्वपृथविभागः समभागेनैव कार्य्य इत्यर्थः। पैठीनसिरपि। पैतृके विभज्य-माने दायाद्ये भ्रातॄणां समो विभाग इति। दायाद्ये दायधने इत्यर्थः।

नच भ्रातृणामिति बहुवचनबलात् द्वयो र्भ्रात्रो रविभागएवेति वाच्यं। मध्यगद्रव्यस्वामिसमर्पणमात्रपरत्वात् तस्य। अतएव मध्यगद्रव्यस्वामिन एकस्यैव दायविभागो देवलेन प्रतिषिध्यते। एकएव सवर्णः स्याद्दायोऽत्र न विभज्यतइति असवर्णानेकभ्रातृविषये क्वचिद्दायो न विभज्यत इति दर्शयितुं सवर्णः स्यादित्युक्तम्। उक्तञ्च मनुना ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न भागभागिति। एतदुक्तं भवति, शूद्राशूद्रभ्रात्रोरनेकत्वेऽपि विवाहशून्यशूद्रापुत्र स्तदर्थं नार्हति अशूद्रएव सर्व्वं गृह्णीयादिति।

एवं विभागानधिकारिसवर्णसाहित्यादनेकेष्वप्येक एव गृह्णीयात्। तथाच संग्रहकारः। सर्व्वमेव हरेत् ज्येष्ठो ऽनुजेष्वनधिकारिषु, मध्यमो वा कनिष्ठोवा ज्यायस्यनधिकारिणि।

नन्वधिकारिसवर्णानेकभ्रातृविषयेऽपि दायो न विभज्यते। यदाह मनुः। ज्येष्ठएव तु गृह्णीयात् पित्र्यं धनमशेषतः। शेषास्तमुपजीवेयु र्यथैव पितरं तथेति। नचैतद्वचनं सहवासपक्षशिक्षार्थमिति वाच्यं, यतस्तदर्थमन्यदेव वचनं सहवसेयुर्व्वेति तेनैव प्रणीतमास्ते सत्यमास्ते। तथाहि प्रगल्भभ्रातृषु सहवासपक्षशिक्षार्थमेव सहवसेयुर्व्वेत्यादेशः अप्रगल्भानुजेषु तु तत्प्रागल्भ्यपर्य्यन्तसहवासएव कार्य्योऽनेन प्रकारेणेति दर्शयितुं ज्येष्ठएव तु गृह्णीयादित्याद्युपदेश इति नानेन वचनेन वचोभङ्ग्या सवर्णानेकभ्रातृषु दायविभागः प्रतिषिध्यत इति न कश्चिद्विरोधः।

यत्तु नारदेनोक्तम् बिभृयाद्वेच्छतः सर्व्वान् ज्येष्ठो भ्राता यथा पिता। भ्राता शक्तः कनिष्ठो वा शक्त्यपेक्षा कुलस्थितिरिति। तदशक्ताखिलानुजविषयम्।

यत्तु गौतमेनोक्तं। सर्व्वं वा पूर्व्वजस्य स इतरान् बिभृयात् पितृवदिति। न चैतन्मानवेन समानार्थमिति वाच्यं, वा शब्देन प्रगल्भभ्रातृष्वनुजानां दायहरत्वपाक्षिकत्वप्रतिपादनार्थत्वावगतेः। सत्यं न मानवेन समानार्थं किन्तु प्रत्यक्षश्रुतिविरुद्धत्वादनादर्त्तव्यम् तथाचापस्तम्बः। ज्येष्ठो दायाद इत्येके, तच्छास्त्रविप्रतिषिद्धम्। मनुः। पुत्रेभ्यो दायं व्यभजदिति अविशेषेण श्रूयते इति ज्येष्ठ-पुत्र एव पुत्राणां मध्ये पैतृकधनभागीत्येके पुनराचार्य्याः मन्यन्ते तन्मतं प्रत्यक्षश्रुतिविरुद्धं यतस्तैत्तिरीयकब्राह्मणे मनुः पुत्रेभ्यो दायं व्यभजदित्यविशेषेण श्रूयतइत्यर्थः स्वमतञ्चानन्तरं तेनैवोक्तं। सर्व्वेहि धर्म्मयुक्ता भागिन इति। सर्व्वे पुत्रा इति शेषः। तथाच बृहस्पतिः। पितृऋक्थहराः पुत्राः सर्व्वएव समांशिन इति। ऋक्थे ऋणेच समांशिन इत्यर्थः। तथाच याज्ञवल्क्यः। विभजेरन् सुताः पित्रोरूर्द्ध्वमृक्थमृणं सममिति। ऋणमत्र पैतृकमेव विवक्षितम्। अपैतृकस्य तदैवापाकरणनियमात्। अतएव कात्यायनः। भ्रात्रा पितृव्यमातृभ्यां कुटुम्बार्थमृणं कृतम्। विभागकाले देयं तदृक्थिभिः सर्व्वमेव तिति। नारदस्तु विभागकाले पैतृकमप्यृणं देयमित्याह। यच्छिष्टं पितृदायेभ्यो दत्तर्णं पैतृकञ्च यत्। भ्रातृभि स्तद्विभक्तव्य मृणी स्यादन्यथा पिता। पितृदायान्नवश्राद्धानि सह दद्यु-रिति गौतमस्मरणात्, पितुरूर्द्ध्वं विभागो य एकोद्दिष्टादनन्तर-मिति संग्रहकारवचनाच्च। एवञ्च पैतृकधनं नवश्राद्धपैतृकर्णापा-करणार्थधनादभ्यधिकं चेन्नारदेनोक्तमेव कार्य्यं नोचेद्याज्ञ-वल्क्योक्तमेवेत्यवगन्तव्यम्। पैतृकमपि किञ्चिदृणं विभागकाले पैतृकधनादनपाकरणीयं किन्तु विभजनीयमेवेत्याह कात्यायनः।

धर्म्मार्थं प्रीतिदत्तञ्च यद्दृणं स्वनियोजितं, तद्दृश्यमानं विभजे न्न दानं पैतृकाद्धनात्। यद्धर्म्मार्थसङ्कल्पितं यच्च पित्रा प्रीतेन वाचा दत्तं, यच्च स्वेनैव पित्रा पुत्रैरपाकरणीयमिति नियोजितं, तदेतत् त्रिविधमृणं दृश्यमानं ज्ञायमानं विभजेदेवेत्यर्थः। यः पुनः पुत्रः स्वकर्त्तृकधनार्जनकर्म्मणा धनं प्राप्तुं शक्तः सन् पितृद्वारागतं धनं नेच्छति तस्य सन्तानत स्तदंशनिमित्तकविवादपरिहारार्थ मस्मादितरैः पुत्रैः विभाज्यधनात् किञ्चिद्धनं मूलधनार्थं दत्त्वाव- शिष्टं विभाज्यमित्याह मनुः। भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्म्मणा। स निर्भाज्यः स्वकादंशात् किञ्चिद्दत्त्वोपजीवनमिति। भ्रातृविशेषस्य कर्म्मभूयस्त्वात् फलभूयस्त्वमिति न्यायेन समभागा- दभ्यधिकेन धान्यादिना विवर्द्धनमितरै भ्रातृभिः कार्य्यमित्याह नारदः। कुटुम्बार्थेषु चोद्युक्त स्तत्कार्य्यं कुरुते तु यः। स भ्रातृभि र्बृंहणीयो ग्रासाच्छादनवाहनैरिति।

इति स्मृतिचन्द्रिकायामजीवद्विभागे समविभागप्रकारः।

---

## अथ विषमविभागप्रकारः।

तत्र बृहस्पतिः। पितृच्छक्थहराः पुत्राः सर्व्वएव समांशिनः, विद्याकर्म्मयुतस्तेषामधिकं लब्धुमर्हति। ये पतितादिव्यतिरिक्ताः पितृच्छक्थहराः पुत्रा विद्यादे रसत्तया सत्तया वा सदृशा स्ते समांशिन एव स्युः, ये पुनर्विद्यादेरसत्तयाच विसदृशा स्तेषां मध्ये यो विद्याद्युपेतः स एवोद्धारेण वा विषमविभागेनाधिकं धनं लब्धु मर्हतीत्यर्थः।

तत्रापि कर्म्मानुष्ठानत्व तारतम्येन लभ्यधनपरिमाणतारतम्यं भवति न पुनर्व्विद्यातारतम्येनेत्याह कात्यायनः। यथा यथा विभागाच्च धनं याथार्थतामियात्। तथा तथा विधातव्यं विद्वद्भिर्भागगौरवं। द्रव्यबाहुल्ये सतीति शेषः। अतएव मनुः। उद्धारो न दशस्वस्ति सम्पन्नानां स्वकर्म्मसु यत्किञ्चिदेव देयं स्यात् ज्यायसे मानवर्द्धनमिति। ज्येष्ठादेरर्पणार्थं विभाज्य-द्रव्यराशेः सकाशात् योर्थ उद्ध्रियते स उद्धारः दशसु कतिपयेषु जीवनमात्रपर्य्याप्तधनेष्विति यावत् स्वकर्म्मसु स्वस्वाधिकारतोऽनु-ष्ठेयकर्म्मसु सम्पन्नानां कर्त्तृत्वमापन्नानामशेषभ्रातृणां द्रव्यबाहुल्ये सत्यपि कर्म्मनिष्ठत्वसाम्यात् उद्धारो मानवर्द्धनार्थदानञ्च नास्ति किन्तु स्वल्पधनशालिषु विद्यादितोऽपि सदृशेषु जीवनमात्र-पर्य्याप्तधनत्वेनानुद्धारेऽपि सम्मानार्थं ज्यायसे किञ्चिद्वस्तुमात्रं देयमित्यर्थः।

एवञ्च येषां भ्रातृणां प्रभूतधनं विद्यते विद्यादौच तारतम्य-मस्ति तेषामेव विभागे उद्धार इति मन्तव्यम्।

उद्धारप्रकारमप्याह मनुः। ज्येष्ठस्य विंश उद्धारः सर्व्वद्रव्याच्च यद्वरं। ततोऽर्द्धं मध्यमस्य स्यात्तुरीयन्तु यवीयस इति। ज्येष्ठ-स्याग्रजस्य विद्यादिवशादुत्तमस्य विभाज्यद्रव्यराशे विंशतितमो-विभागः श्रेष्ठमेकं द्रव्यं तस्मिन्नेव राशौ चत्वारिंशत्तमो भागो-मध्यममेकं द्रव्यं जन्मतो मध्यमस्य विद्यादिवशतश्च मध्यमस्य उद्धारः, तुरीयः तस्मिन्नेव राशौ अशीतितमो भागः कनिष्ठमेकं द्रव्यं जन्मना विद्यादिवशाच्च यवीयस उद्धारः स्यादित्यर्थः।

अवशिष्टस्यच राशे र्व्विभागप्रकारमाह सएव। एवं समुद्धृतो-द्धारे समानंशान प्रकल्पयेदिति। उद्धृतावशिष्टं समं विभजे-

दित्यर्थः। अथवा अस्मिन्नेव विषये विषमविभागएव स्यान्नोद्धार इत्याह उद्धारेऽनुद्धृते तेषामियं स्यादंशकल्पना। एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्द्धं ततोऽनुजः। अंशमंशं यवीयांस इति धर्म्मो व्यवस्थितः एकाधिकमंशं द्व्यंशमिति यावत् द्व्यंशं वा पूर्व्वजः स्यादिति गौतमस्मरणात्। पूर्व्वजो विद्यादिना ज्येष्ठ इत्यर्थः। अतएव वृहस्पतिः। जन्मविद्यागुणज्येष्ठो द्व्यंशं दायादवाप्नुयादिति। एवञ्च न जन्मतः प्राथम्यादिमात्रमुद्धारे विषमविभागे वा कारणं किन्तु विद्यादिनिबन्धनश्रेष्ठत्वाद्युपेतं प्राथम्यादिकमिति मन्तव्यम्।

अयञ्चासमविभागप्रकारः कलियुगे तु न वर्त्तत इत्याह संग्रहकारः। यथा नियोगधर्म्मो च नानुबन्ध्यावधोऽपि वा। तथोद्धारविभागोऽपि नैव संप्रति वर्त्तते। अद्य सम्प्रति शब्दौ कलियुगमभिसन्धायोक्तौ। अतएव पुराणं। ऊढ़ायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा। कलौ पञ्च न कुर्व्वीत भ्रातृजायां कमण्डलुमिति। ज्येष्ठांशं जन्मविद्यादिश्रेष्ठनिबन्धनांशं गोवधं अनुबन्ध्यादिकर्म्माङ्गं, कमण्डलुं गृहिणः कमण्डलुधारणं। एतदेव धारेश्वरेणोक्तं ज्येष्ठस्य विंश उद्धार इत्येवमादीनि वाक्यानि न विचार्य्यन्ते लोकेनात्यन्तपरित्यक्तत्वात् कलाविति शेषः द्वापरादावनुष्ठेयत्वेनात्यन्तपरित्यागाभावात्।

यत्तु पुनर्व्विश्वरूपेणोक्तं यथा, महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेदित्यस्य शिष्टाचारेण बाधितत्वात् अकरणं एवमुद्धारस्यापीति, तदयुक्तं स्मृतिशिष्टाचारयोर्व्विरोधे शिष्टाचारस्यैव दुर्व्वलस्य बाध्यत्वात्। दुर्व्वलत्वञ्च। श्रुतिस्मृतिविहितो धर्म्मस्तदलाभे शिष्टाचारः प्रमाणमिति वशिष्ठस्मरणादवगम्यते।

किञ्च महोक्षादेरनुपकल्पनं शिष्टाचाराभाव एव न पुनः शिष्टाचार इति शिष्टाचारेण बाधितत्वादित्ययुक्तमुक्तं शिष्टाचाराभावादकरणमिति, श्रीकरोक्तिवद्वक्तव्यं नच तथोक्तं ।

यत् पुनर्व्विज्ञानेश्वरेणोक्तं सत्यमयं विषमो विभागः शास्त्रदृष्ट स्तथापि लोकविद्विष्टत्वान्नानुष्ठेय इति, एतदपि वाङ्मात्रेणैतदुद्धारविषमविभागादौ लोकविद्वेषोऽस्ति प्रत्युत विद्यागुणपुण्यकर्म्मसम्पन्नज्येष्ठादौ भागाधिक्ये लोकानुरागो दृश्यतइति यत्किञ्चिदेतत् ।

ये पुनः स्मृतिसमुच्चयकाराः शम्भुश्रीकरदेवस्वाम्यादयः संप्रत्युद्धारविषमविभागयोः शिष्टाचारं क्वापि मन्यमाना उद्धारादिविषयाणि स्मृतिवाक्यानि विचारयितुं ग्रन्थविस्तारं चक्रिरे तेषां धर्म्मज्ञसमयपुराणवचनाभ्यां कलौ सर्व्वत्र शिष्टाचाराभावस्य निश्चितत्वात् वृथैव प्रयासो ग्रन्थविस्तरश्च जायत इत्यस्माभिरुद्धारादिविषये दिङ्मात्रमेव प्रदर्शितं ।

इति स्मृतिचन्द्रिकायां जीवद्विभागे विषमविभागप्रकारः ।

---

अथान्यान्यपि अजीवद्विभागविषयाणि ।

तत्र वशिष्ठः ।

अथान्यान्यप्यजीवद्विभागविषयाणि कानिचिद्वचनानि लिख्यन्ते । अथ भ्रातॄणां दायविभागो याश्चानपत्याः स्त्रिय स्तासा मापुत्रलाभादिति । याः पितृस्त्रियो ऽनपत्या गर्भस्थापत्या स्तासा-

मापुत्रलाभादाप्रसवात् सहवासेन स्थितानां भ्रातॄणां अनपत्य-स्त्रीणाञ्च प्रसूतापत्यलिङ्गज्ञानानन्तरं दायविभागो न पुनरेवं-विधविषये नवश्राद्धानन्तरं दायविभाग इत्यर्थः।

नन्वस्य वचनस्य नवश्राद्धानन्तरं भ्रातॄणामनपत्यस्त्रीणाञ्च दायविभागो भवतीति ऋजुरर्थः कथं परित्यज्यते, उच्यते। स्त्रीणा-मापुत्रलाभादिति विरुद्धार्थावगते स्तत्परिहाराय परित्यज्यते स्त्रीणामदायानां दायविभागासम्भवाच्च परित्यज्यते, तथा चार्हति स्त्रीत्यनुवृत्तौ बौधायनश्राह। न दायं निरिन्द्रिया ह्यदायाश्च स्त्रियो मता इति श्रुतिरिति। हि शब्दोऽत्र यस्मादर्थे। एवञ्चायमर्थः यस्मान्निरिन्द्रिया व्याध्यादिना-पगतेन्द्रियाः स्त्रियश्च अदाया मता इति श्रुतिः तस्मान्न स्त्री दायं विभक्तव्यान्यद्वारागतं द्रव्यमर्हतीति। निरिन्द्रिया ह्यदायाश्च स्त्रियो मता इत्यनेन तस्मात् स्त्रियो निरिन्द्रिया अदाया इति तैत्तिरीयकश्रुतिरर्थतः प्रदर्शितेति मन्तव्यं। यद्यप्यदायाः स्त्रियः कथं तर्हि याज्ञवल्क्ये-नोक्तं पितुरूर्द्धं विभजतां माताप्यंशं समं हरेदिति। कथञ्च व्यासेन, असुतास्तु पितुः पत्न्यः समांशाः परिकीर्त्तिताः। पिता-मह्यश्च सर्व्वास्ता मातृतुल्याः प्रकीर्त्तिता इति। कथं विष्णुना, मातरः पुत्रभागानुसारिभागहारिण्य अनूढ़ाश्च दुहितर इति। नहि स्त्रीणां दायानर्हत्वे मात्रादीनां दुहित्रान्तानां अंशहारि-त्वोक्तिः प्रयुज्यते, वाढं युज्यते, दायानर्हाणां हि दायहरत्वोक्ति-र्विरुध्यते न पुनरंशहरत्वोक्तिः अंशो हि भागवचनो न दाय-वचनः, गणद्रव्यादावप्यंशो देय इति प्रयोगदर्शनात् तेन मात्रा-दीनां दायद्रव्याभावेनाविभागेऽपि विभाज्यराशौ स्वाम्यस्य पत्न्यधि-करणसिद्धस्य विद्यमानत्वात् तत्र यावदर्थमर्थग्रहणं स्वकीयस्वाम्य-

व्यवस्थापकं मात्रादिभिरंशतः कार्य्यमिति याज्ञवल्क्यादिभिरुक्तमिति मन्तव्यं।

नच दायशब्देन यद्धनं स्वामिसम्बन्धादेव निमित्तादन्यस्य स्वं भवति तदुच्यत इति दायादिशब्दार्थनिरूपणार्थं मिताक्षरायामुक्तं युक्तं। एवं हि पत्युः स्वं, पतिसम्बन्धादेव निमित्तात् पत्नीस्वं भवतीति तस्यापि दायत्वापत्तिः ततस्त्वादायाः स्त्रिय इति श्रुतिविरोधो दुर्व्वारः स्यात्।

अस्मन्मतेतु विभागार्हं स्वं स्वामिसम्बन्धादेव निमित्तादन्यस्य स्वं भूतं दायशब्दार्थ इति, विभागानर्हं पत्नीस्वं न दायः तथाहि पतिदारागतं स्त्रीधनं नित्यं विभागानर्हमेव लोके दम्पत्यो र्धने विभागादर्शनात् जायापत्योर्न विभागोविद्यत इति हारीतस्मरणाच्च, तेनाच न मातुः स्वत्वव्यवस्थापको दायविभागः किन्तु यावदर्थमेवार्थहरणमिति मन्तव्यं। अतएव स्मृत्यन्तरे निर्द्धनमात्रविषयमेवांशहरणं न मातृमात्रविषयमिदमिति ज्ञायते। जनन्यस्वधना पुत्रै र्व्विभागे ऽंशं समं हरेदिति स्मरणात्।

अस्वधना प्रातिस्विकस्त्रीधनशून्या जननी, पुत्रैरजीवद्विभागे क्रियमाणे पुत्रांशसममेवांशं हरेदित्यर्थः जननीग्रहणं तत्सपत्न्यादेरप्युपलक्षणार्थं। मातरः पुत्रभागानुसारि भागहारिण्य इति विष्णुस्मरणात् अस्वधनेति विशेषणोपादानात् स्वधनादेव स्वकीय जीवनस्य स्वानुष्ठेयस्यच धनसाध्यकर्म्मणः सिद्धिसम्भवे जनन्यादीनां सधनानामपि भागग्रहणमिति गम्यते। तथाच स्वधनमात्रात् तयोः सिद्ध्यसम्भवे जनन्यादीनां सधनानामपि न समभागहरणं किन्तु यथोपयोगं न्यूनभागस्यैव हरणमिति च गम्यते। तथाच विभाज्यराशे रतिबहुत्वे निर्द्धनानामपि जनन्यादीनां न समांश-

हरणं किन्तु यथास्वोपयोगं समांशान्न्यूनस्यैवांशस्य हरणमित्यपि गम्यते। अस्वधनेति विशेषणस्योपयोगवशादंशहरणं जनन्या न पुन र्भ्रातृवद्दायभागित्ववशादिति ज्ञापनार्थत्वात्। सममिति विशेषण-स्योपयोगवशादसमांशस्य हरणेऽप्यवैयर्थ्यं। अल्पविभाज्यराशे-रधिकपूरणस्य, प्राप्तस्य निवृत्त्यर्थत्वात्। यत् पुनर्व्विष्णुना, दुहि-तृणां पुत्रविभागानुसारिभागहारित्व मुक्तं तत्रापि जन्मना स्वत्वा-न्वितस्य पितृमरणे ऽप्यस्वतन्त्रावस्थस्य विभाज्यस्यादायत्वात्। अनूढ़ेति विशेषणोपादानात् स्वविवाहार्थं पुत्रभागानुसारिभाग-ग्रहणं न पुनर्भ्रातृणामिव दुहितॄणां दायविभागार्थमिति गम्यते यतएवादायविभागार्थं अंशग्रहणं किन्तु विवाहसंस्कारार्थं अतएव विभाज्यधनबाहुल्याभावविषयमेतदिति वक्ष्यते।

अतएव देवलेनोक्तं। कन्याभ्यश्च पितृद्रव्यं देयं वैवाहिकं वस्विति। वैवाहिकं वसु विवाहप्रयोजकधनमित्यर्थः। अतएव संस्कार्य्या इत्यनुवृत्तौ याज्ञवल्क्यः। भगिन्यश्च निजादंशा-द्दत्वांशन्तु तुरीयकमिति। एकस्य पुत्रस्य यावान्निजांशः तच्चतु-र्थांशं प्रतिभगिनि प्रदाय भ्रातृभि र्भगिन्यः संस्कार्य्या विवाह-यितव्या इत्यर्थः। स्मृत्यन्तरेऽपि भ्रातृभ्योऽंशं चतुर्थांशं तत्र कन्या हरेद्धनमिति। भ्रातृभ्यः सकाशात् चतुर्थांशं धनं, तत्रा-जीवद्विभागे एकैका कन्या हरेदित्यर्थः। अनल्पविभाज्यद्रव्य-विषयमेतत्। तथाच कात्यायनः। कन्यकानां त्वदत्तानां चतुर्थो भाग इष्यते पुत्राणान्तु त्रयो भागाः साम्यं स्वल्पधने स्मृत-मिति। कन्यकानां प्रत्येकमिति शेषः। एवं पुत्राणामित्यत्रापि शेषो द्रष्टव्यः। अल्पे विभाज्यधने पुत्रे भागसाम्यं त्वेकैकस्य कन्याभागस्य, विष्ण्वादिना स्मृतमिति तुर्य्यपादार्थः, साम्यं स्वल्प-

धने स्मृतमित्येत भ्रातरः पुत्रभागानुसारिभागहारिण्य इत्यत्रापि द्रष्टव्यं न्यायसाम्यात्। एवञ्चानल्पे विभाज्यधने, चतुर्थो भाग इति पारिशेष्यादवगम्यते। पुत्राणान्तु त्रयो भागा इत्येतत् सम-संख्यक भ्रातृभगिनीविषयं। यत्तु भगिन्यो न्यूनसंख्यका स्तत्र पुत्राणां न त्रयो भागाः किन्तु किञ्चिदभ्यधिकाः।

यत् पुनर्म्मनुनोक्तं। स्वेभ्यो ऽंशेभ्यस्तु कन्याभ्यः प्रदद्यु र्भ्रातरः पृथक्। स्वात् स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सव इति। यद्यप्यस्मात् स्वात् स्वादिति वीप्सावन्तो भ्रातृणामंशा स्तावन्त एव चतुर्थांशाः कन्याभ्यः भ्रातृभिः प्रदेया इत्यर्थः प्रतिभाति। तथाप्यधिकसंख्यककन्याविषयत्वात् न प्राचीनस्मृतिविरोधः। नचात्रैकैकस्याः स्वात् स्वात् चतुर्थांशदानं येन प्राचीनस्मृतिविरोधः स्यात्, किन्तु समुदायस्येति सुतरामविरोधः। दत्तञ्च कन्याभिः समत्वेन विभज्य ग्राह्यं। यत् पुनर्व्विष्णुनोक्तं, अनूढानान्तु कन्यानां स्ववित्तानुसारेण संस्कारं कुर्य्यादिति। तदेकपुत्रतया, दायविभागाभावविषयं, यद्वा भ्रातृणां सहवासविषयं। कन्या-ग्रहणमसंस्कृतानां पितुरपत्यानां उपलक्षणार्थं। अतएव व्यासः असंस्कृतास्तु ये तत्र भ्रातरः पूर्व्वसंस्कृतैः। संस्कार्य्या भ्रातृभिः काले पैतृकादेव वै धनात्। संस्कार्य्या भ्रातृभि र्ज्येष्ठैः कन्यकाश्च यथाविधि इति। वृहस्पतिरपि। असंस्कृता भ्रातरस्तु ये स्यु स्तत्र यवीयसः, संस्कार्य्या भ्रातृभि श्चैव पैतृकान्मध्यभागात् धनात्। तत्राजीवत्पितृकेषु भ्रातृष्वित्यर्थः असंस्कृताः पित्रेति शेषः। अतएव नारदः। येषां वै न कृताः पित्रा संस्कारविधयः क्रमात् कर्त्तव्या भ्रातृभि स्तेषां पैतृकादेव तद्धनात्।

पैतृकधनाभावे त्वाह। सएव अविद्यमाने पित्रर्थे स्वांशादु-

द्धृत्य वा पुनः। अवश्यकार्य्याः संस्कारा भ्रातृणां पूर्व्वसंस्कृतैः। संस्कारा जातकर्म्माद्याः उपनयनान्ताः विवक्षिताः अवश्यकार्य्या इत्यभिधानात् विवाहादिसंस्कारस्य तु नैष्ठिकत्वादिपक्षान्तरदर्शनात् अवश्यकार्य्यत्वाभावात् संस्कारशब्दस्य च सङ्कोचो विवक्षित इत्यनवद्यं। कन्यकानान्तु विवाहान्ताः संस्कारा, उपनयनरहिताः पित्रर्थाभावे स्वार्थादुद्धृत्य कार्य्याः विवाहस्योपनयनस्थानत्वेनावश्यकत्वात् ।

विभागकालेऽन्यदपि धनं कन्यका स्वधृतालङ्कारादि लभत इत्याह शङ्खः। विभज्यमाने दायाद्ये कन्यालङ्कारं वैवाहिकं स्त्रीधनं कन्या लभेतेति। दायाद्ये, दायधने, भ्रातृभि र्व्विभज्यमाने कन्या स्वधृतमलङ्कारं वैवाहिकं तुरीयांशादि धनं स्त्रीधनञ्च पित्रादिदत्तं लभेतेत्यर्थः। बौधायनोऽपि। मातुरलङ्कारं दुहितरः साम्प्रदायिकं लभेरन्नन्यद्वेति। साम्प्रदायिकं मातृपरम्परायातं, अन्यत्तदितरद्वा मातृधृतमलङ्कारं मातृके विभज्यमाने दुहितरः कुमार्य्यो भजेरन्नित्यर्थः ।

इति स्मृतिचन्द्रिकायामजीवद्विभागविषयाणि ।

## अथ दायानधिकारिणः ।

अथान्यान्यपि दायांशानर्हविषयाणि कानिचिद्वचनानि लिख्यन्ते।

तत्र देवलः। मृते न पितरि क्लीवकुष्ठ्युन्मत्तजड़ान्धकाः। पतितः पतितापत्यं लिङ्गी दायांशभागिनः। मृते पितरि क्लीवादयो

दायविभागिनो न भवन्ति. लिङ्गी नैष्ठिक वानप्रस्थादि क्षपणक पाशुपतादि श्चात्र विवक्षितः, मृते पितरीति विभागकालप्रदर्शनार्थमुक्तं तेन पितरि जीवत्यपि जीवद्विभागे क्लीवादयो दायविभागिनो न भवन्ति। अतएव जीवद्विभागे ऽप्यभागित्वमेषां व्यक्तमुक्तमापस्तम्बेन। जीवन् पुत्रेभ्यो दायं विभजेत् समं क्लीवमुन्मत्तं पतितञ्च परिहाप्येति। च शब्दः कुष्ठिजड़ान्धादीनामुपलक्षणार्थः, परिहाप्य वर्जयित्वेत्यर्थः। मनुरप्याह। अनंशौ क्लीवपतितौ जात्यन्धवधिरौ तथा। उन्मत्त जड़ मूकाश्च येच केचि न्निरिन्द्रियाः। निरिन्द्रिया व्याध्यादिना विनष्टघ्राणादीन्द्रियाः। नारदोऽपि पितृद्विट् पतितः षण्डो यश्च स्यादवपातकः। औरसा अपि नैवांशं लभेरन् क्षेत्रजाः कुतः। अवपातकः अवपातितः, अवपातितस्य त्वकृथपिण्डोदकानि निवर्त्तन्ते इति शङ्खलिखितस्मरणात्। अवपातितस्य महापराधेन बन्धुवहिष्कृतस्येत्यर्थः। वशिष्ठोऽपि अनंशा स्त्वाश्रमान्तरगता इति। गृहस्थाश्रममुपेत्येति शेषः।

न चैवमुपकुर्व्वाणस्य ब्रह्मचारिविशेषस्याप्यंशभूत्यत्वमिति वाच्यं, गृहस्थाश्रमानङ्गीकार्य्याश्रमान्तरस्यात्र विवक्षितत्वात्। विष्णुरपि। पतितक्लीवाचिकित्स्यरोगविकला स्त्वभागहरा इति। विकल, इन्द्रियविकलः। अचिकित्स्यरोग इति वदन् चिकित्स्य क्लैब्य वैकल्यादि शालिनो भागार्हा इति दर्शयति। तेन विभागकालस्थिताचिकित्स्यव्याधिशालिनामपि अभागहरत्वं न पुनः सहजवाधिर्य्य क्लैब्यादि शालिनामेवेति मन्तव्यं। कात्यायनोऽपि। अक्रमोढ़ासुतश्चैव सगोत्राद्यस्तु जायते प्रव्रज्यावसितश्चैव न रिक्थं तेषु चार्हति। अक्रमोढ़ासुतः वर्षक्रमजन्मक्रमातिक्रमेण

परिणीतायाः सुतो यः। तथा सगोत्रात् सगोत्रस्त्रीपरिणेतुः सकाशाद्यः सुतः सगोत्रस्त्रियां जायेत, तथा प्रव्रज्यावसितः स्वीकृत-चतुर्थाश्रमत्यागी यो भवेत्। तेषु अक्रमोढ़ासुतादिषु ऋक्थं प्राप्तुं नार्हति ते ऋक्थानर्हा इत्यर्थः। मनुरपि अनियुक्तासुत स्यैव दुनिष्काप्तस्य देवरात्। उभौ तौ नार्हतो भागं जारजातक कामजौ। अनियुक्तायां परस्त्रियां अपरिणेतुः सकाशात् उत्पन्नः सुतो जारजातकः स्वार्थे क प्रत्ययः। परिणेत्रोत्पन्न-पुत्रवत्यां देवरादुत्पन्नः कामजः, तावुभौ भागं नार्हत इत्यर्थः।

एतदुक्तं भवति जारजातो नियोगविध्यतिक्रमेण जातस्य क्षेत्रिणो भागं नार्हतीति। वृहस्पतिरपि। सवर्णाजो ऽप्य-गुणवा नार्हः स्यात् पैतृके धन इति। अगुणवान् पितु दृष्टादृष्ट-कार्य्योपयोगि गुणरहितः। तथाचानन्तरमुक्तं तेनैव। उत्त-मर्णाधमर्णाभ्यां पितरं त्रायते सुतः। अतस्तु विपरीतेन नास्ति तेन प्रयोजनं। तथा गवा किं क्रियते या न दोग्ध्री न गर्भिणी। कोर्थः पुत्रेण जातेन यो न विद्वा न धार्म्मिकः। शास्त्र शौर्य्यार्थ-रहित स्तपोविज्ञान-वर्जितः। आचारहीनः पुत्रस्तु मूत्रोच्चार-समः स्मृत इति। उत्तमर्णं ऋषिदेवपितृणामृणं अधमर्णं धनिकहस्ताद् गृहीतमृणं, यथा मूत्रपुरीषे स्वकीयोदरात् निर्गते-ऽप्यत्यन्तहेयभूते तथैव विद्यादिरहितः सूनु रौरसोऽपि हेयभूत इति मूत्रपुरीषोच्चारसम इत्युक्तं। मनुरपि। सर्व्वएव विकर्म्मस्था नार्हन्ति भ्रातरो धनं इति। विकर्म्मस्था निषिद्धकर्म्मैकरताः धनं विभाज्यधनं। एवं निरूपितनिरंशकाः सर्व्वे पोषणीयाः। तथाच याज्ञवल्क्यः। क्लीवोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जड़ः। अन्धोऽचिकित्स्यरोगाद्या भर्त्तव्याः स्यु निरंशकाः। तज्जः पति-

तोत्पन्नः। आद्यशब्देनान्येषां प्राक्प्रतिपादितानां ग्रहणं। भर्त्तव्या दायहरै रिति शेषः। तत्कृथग्राहिभि स्ते भर्त्तव्या इति विष्णुस्मरणात्।

कथं भर्त्तव्या इत्यपेक्षिते मनुः। सर्व्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा। ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत्। अत्यन्तं यावज्जीवमित्यर्थः। कात्यायनोऽपि ग्रासाच्छादनमत्यन्तं देयं तद्बन्धुभि र्मतं। बन्धूनामप्यभावे तु पितृद्रव्यमवाप्नुयात्। अपित्र्यं द्रविणं प्राप्ता दापनीया न बान्धवा इति। तद्बन्धुभि र्निरंशकबन्धुभि स्तत्पितृद्रव्यग्राहिभि र्ग्रासाच्छादनं देयमिति मन्वादीनां सम्मतमित्यर्थः।

अपित्र्यमित्यादे रयमर्थः। निरंशकपितृद्रव्यं तद्बन्धुभिरनाप्तं राज्ञा तद्बन्धवो भरणाय न दापनीया इति। एतदुक्तं भवति निरंशकपित्र्यधनग्राहक बान्धवाना मनावश्यकं निरंशकभरणमिति।

एवमशेषनिरंशकानां भरणे प्राप्ते कस्यचित् पर्य्युदासं कुर्व्वन्नाह देवलः। तेषां पतितवर्ज्जेभ्यो भक्तवस्त्रं प्रदीयतइति। पतितोत्पन्नस्यापि पतितत्वात् सोऽपि वर्ज्ज्यः। अतएव बौधायनः। अतीतव्यवहारान् ग्रासाच्छादनै र्बिभृयुः अन्धजड़क्लीवव्यसनिव्याधितादींश्चाकर्म्मिणः पतिततज्जातवर्ज्जमिति। अतीतव्यवहारा मूकादयः। अकर्म्मिणो धर्म्मार्थवृद्ध्यर्थकर्म्मसु अक्षमाः।

वशिष्ठस्तु। तत्रोक्तचतुर्णां भरणप्रतिषेधमाह। अनंशा स्त्वाश्रमान्तरगताः क्लीवोन्मत्तपतिताश्च, भरणं क्लीवोन्मत्तानामिति। अत्र विशेषग्रहणं विशेषप्रतिषेधार्थमिति न्यायेन पतिताश्रमान्तरगतविषयस्य भरणस्य प्रतिषेधो गम्यते। आश्र-

माश्रमान्तरगतिमन्तरेण प्रव्रज्यावसितत्वाभावात् प्रव्रज्यावसितभरणस्यापि प्रतिषेधोऽत्रावगम्यते। एवञ्च पतित तज्जाताश्रमान्तरगत प्रव्रज्यावसितवर्ज्जानां निरंशकानां भरणमावश्यकमिति मन्तव्यं।

निरंशकपुत्राणामंशग्रहणविरोधिक्लैब्याद्यभावे निरंशकपुत्रत्वेनैव पैतामहधनानर्हत्वे प्राप्ते तदपवादमाह देवलः। तत्पुत्राः पितृदायांशं लभेरन् दोषवर्जिता इति। तत्पुत्रा निरंशकपुत्रा अंशग्रहणविरोधि क्लैब्यादि दोषवर्जिताः, पितृदायांशं पैतामहधनांशं लभेरन्नित्यर्थः। नचेदं वचनं पतितापत्यस्यापि पैतामहधनग्राहित्वं प्रापयति तत्पुत्रा इति सामान्येनाभिधानादिति वाच्यं। दोषवर्जिता इत्यनेन व्युदासत्वात्। पतितस्य पुनरपत्यं पतितमेव भवति। तथाच वशिष्ठः। पतितोत्पन्नः पतितो भवतीत्याहु रन्यत्र स्त्रियाः साहि परगामिणीति।

पतितस्य पुत्रवत् प्रतिलोमायाः स्त्रियाः पुत्रस्य पुत्रोऽपि पैतामहधनानर्हः अंशग्रहणविरोधिदोषसद्भावात्, अतएव विष्णुः। तेषामेवौरसाः पुत्रा भागहारिणो नतु पतितस्य पतनीये कृते कर्म्मणि अनन्तरोत्पन्नाः प्रतिलोमासु स्त्रीषुत्पन्नाश्चाभागिन स्तत्पुत्राः पैतामहेऽप्यर्थइति। अनन्तरोत्पन्नाः पश्चादुत्पन्नाः। आनन्तर्य्यस्यात्र विवक्षितत्वात् ते तु न भागहारिणः, एवं प्रव्रज्यावसितादिपुत्रेषु यत्र यत्रांशग्रहणविरोधिदोषसद्भाव स्तत्र तत्र पैतामहधनाभागित्वं विज्ञेयं।

क्षेत्रजपुत्रविषयेऽप्युक्तं याज्ञवल्क्येन। औरसाः क्षेत्रजास्त्वेषां निर्द्दोषा भागहारिण इति। तद्द्वापरादिविषयं मन्तव्यं, कलौ क्षेत्रजपुत्रनिषेधात्। सदोषा स्त्वौरसादयो भर्त्तव्या इत्येतद्ब्याविकिनुसरोगाद्या भर्त्तव्याः स्यु र्निरंशका इत्यनेनोक्तमितीह

नोक्तं, किन्तु पूर्व्वं यच्चोक्तं तदाह सएव । सुता स्त्रेषां प्रभर्त्तव्या यावद्वै भर्त्तृसात् कृताः । अपुत्रा योषितश्चैषां भर्त्तव्याः साधुवृत्तयः । निर्व्वास्या व्यभिचारिण्यः प्रतिकूला स्तथैव चेति । सुताः कन्यकाः । एषां निरंशकानां । भर्त्तव्या निरंशकपुत्रद्रव्यग्राहिभिः निरंशकभरणप्रकारेण यावज्जीवमिति । अस्यापवादो यावद्वै भर्त्तृसात् कृता इति । यावद्विवाहसंस्कृता भवन्ति तावदेवेत्यपवादभागस्यार्थः ।

एषां निरंशकानां अपुत्रा योषितः परिणीताः स्त्रियः सदाचारा निरंशकपितृद्रव्यग्राहिभिरेव निरंशकभरणप्रकारेणैव भर्त्तव्या व्यभिचारिण्यो भर्त्तृप्रतिकूलाश्च गृहाद्वहिष्कार्य्याः । अत्रासाधुवृत्तयोनिर्व्वासिता न भर्त्तव्या प्रतिकूलास्तु निर्व्वासिता भर्त्तव्याः ।

इति स्मृतिचन्द्रिकायां अंशानर्हविषयाख्यि ।

---

## अथ विभाज्य निरूपणं ।

तत्र कात्यायनः । पैतामहञ्च पित्र्यञ्च यत् किञ्चित् स्वयमर्जितं । दायादानां विभागेतु सर्व्वमेतद्विभज्यते । स्वयमर्जितं पित्राद्यविभक्तद्रव्योपयोगेन, तदनुपयोगेन स्वयमर्जितस्याविभाज्यत्वात् । एतत् त्रिविधं धनं सर्व्वं विभज्यते यदि नास्ति पिता-

महादिकृतमृणादिकमिति शेषः। अस्य चेन्न सर्वं अपितु ऋणादिकं दत्त्वावशिष्टं विभज्यते। तथाच सएव। ऋणं प्रीतिप्रदानन्तु दत्त्वा शेषं विभाजयेदिति। प्रीतिप्रदानं प्रीत्या दत्तं। शेषं विभाजयेदिति वदन् विभाज्यत्वाकाङ्क्षाविषयमेतदिति दर्शयति तदवाकाङ्क्षाविषयेतु ऋक्थवदृणमपि विभाज्यमित्यजीवद्विभागप्रकरणे दर्शितं।

विभागकाले यदृणं प्रतिदेयं तत्याकूटत्वनिश्चयार्थं बन्धुभिः सह ऋक्थग्राहिभि स्तद्विशोध्यमित्याह सएव। ऋणमेवंविधं शोध्यं विभागे बन्धुभिः सहेति।

अवञ्चनार्थं ऋक्थमपि विशोध्यमित्याह सएव। गृहोपस्करवाह्याश्च दोह्याभरणकर्म्मिणः। दृश्यमाना विभज्यन्ते कोशं गूढे ऽब्रवीद्भृगुः। कर्म्मिणः कर्म्मकरा दासादयः। गूढे द्रव्यवञ्चनाशङ्कायां कोशाख्यं दिव्यं भृगुरब्रवीदित्यर्थः। तथाच सएव। गूढद्रव्यविशङ्कायां प्रत्यय स्तत्र कीर्त्तित इति। प्रत्ययो दिव्यं, तदपि कोशाख्यमेवेत्युक्तं प्राक्। वृहस्पतिरप्यत्र तदेव दिव्यं भवतीत्याह। गृहोपस्करवाह्यादि दोह्यालङ्कारकर्म्मिणः दृश्यमाना विभज्यन्ते गूढे कोशो विधीयतइति। नच कोशग्रहणं यथाप्राप्तदिव्योपलक्षणार्थमिति वाच्यं। शङ्काविश्वाससन्धाने विभागे रिक्थिनां सदा क्रियासमूहकर्त्तृत्वे कोशमेव प्रदापयेदिति कात्यायनीये विभागविषये विहितेऽपि कोशे पुनरिह कोशाभिधानस्य नियमार्थत्वात्। तेन वार्हस्पत्येऽपि कोशग्रहणमार्थमेव।

इति स्मृतिचन्द्रिकायां विभाज्यनिरूपणं।

---

## अथाविभाज्यनिरूपणं।

---

तत्र व्यासः। विद्याप्राप्तं शौर्य्यधनं यच्च सौदायिकं च
विभागकाले तत्तस्य नान्वेष्टव्यं स्वरिक्थिभिः, विद्याप्राप्तशब्देन
विद्यामात्रप्राप्तमुच्यते किन्तु विशेषेण प्राप्तं। तथाच कात्या
परभक्तोपयोगेन विद्या प्राप्तान्यतस्तु या, तया प्राप्तं तु यद्वित्तं
प्राप्तं तदुच्यते। परशब्दो ऽविभक्तापेक्षया यद्व्यत्यन्तरं तच्
ज्यते भक्तशब्दो द्रव्यमात्रोपलक्षणकतया प्रयुक्तः। उक्तन्
विद्यया धनप्राप्तिर्निमित्तत्वमनेकविधमिति निमित्तभेदेन तद्
धनमप्यनेकविधं तत् सर्व्वमविभाज्यमिति संक्षेपतो विद्याप्रा
नैव व्यासेनाभिहितं।

तत् शब्दार्थं प्रपञ्चयितुमाह कात्यायनः। उपन्यस्ते तु
विद्यया पणपूर्व्वकं विद्याधनं तु तद्विद्यात् विभागे न नियु
शिष्यादार्त्विज्यतः प्रश्नात् सन्दिग्धप्रश्ननिर्णयात् स्वज्ञानश
वादात् लब्धं प्राध्ययनाच्च यत्, विद्याधनन्तु तत् प्राहुर्व्विभ
नियुज्यते, परं निरस्य यल्लब्धं विद्यया पणपूर्व्वकं विद्या
तद्विद्यात् न विभाज्यं वृहस्पतिः। विद्याप्रतिज्ञया लब्धं
दाप्तञ्च यद्भवेत्। च्छलिङ्गाथेन यल्लब्ध मेतद्विद्याधनं
शिल्पेष्वपि हि धर्म्मोऽयं मूल्याद्यच्चाधिकं भवेत् विद्याबलव
याज्यतः शिष्यतस्तथा। एत द्विद्याधनं प्राहुः सामान्यं यद
ष्टेति। उपन्यस्ते वर्णत्यागादिवैचित्र्येणोपन्यस्ते, शिष्याद
नादौ, आर्त्विज्यतः आर्त्विज्यकरणात्, प्रश्नात् उपपातक्यादि

शिक्षितार्थप्रश्नात् । सन्दिग्धप्रश्ननिर्णयात् अर्थ्यादिकृतप्रश्नप्रतिप्रश्नयोर्निर्णयात् । स्वज्ञानशंसनात् अग्रपूजादौ स्वज्ञानख्यापनात्, वादात् जल्पवितण्डादिभेदात्, प्राध्ययनात् घटिकाध्ययनात् । विद्यातोऽन्यहृदयज्ञानादिना विद्याप्रतिज्ञया बहुविद्याज्ञत्वप्रतिज्ञया, शिष्यादाप्तं गुरुपूजार्थं । आर्त्विज्ययाजेन लब्धं उपदेष्टृत्वादिना लब्धं, शिल्पेष्वपिहि शिल्पविद्योपार्जनविषयेष्वपि अयं विद्याधनविभागरूपो धर्मोस्ति, मूल्यात् भृते येद्धनमधिकं स्तनकाध्यापनादौ भवेत् । तथा विद्यावल-कृतविद्याधिकत्वतं यद्विशिष्टपूजादौ भवेत् तथा याज्यतः शिष्यतः संस्कारादौ भवेत् तदेतद्विद्याधनं प्रातिस्विकं प्राहुः । अतो विद्याधनात् अन्यथाभूतं अविभक्तपित्रादिद्रव्योपयोगेन प्राप्तं तदविभक्तानां सामान्यं साधारणं विभाज्यमिति यावत् । शेषं व्यक्तार्थं ।

नारदोऽपि सामान्यं विद्याधनमाह । कुटुम्बं बिभृयाद्भ्रातुर्यो विद्यामधिगच्छति, भागं विद्याधनात्तस्मात् स लभेताश्रुतोऽपि सन् । अविभक्तधनोपयोगेन प्राप्तविद्याधनस्य विभाज्यत्वदर्शनार्थमेतत् । अश्रुतोऽप्यविद्योपीत्यर्थः । एवमविभक्तपित्रादिगृहीतविद्यालब्धमपि धनं विभाज्यं । तथाच कात्यायनः । कुले विनीतविद्यानां भ्रातृणां पितृतोऽपि वा, शौर्य्यात् प्राप्तन्तु यद्वित्तं विभाज्यंतु बृहस्पतिः । अविभक्तास्वकुले, पितृव्यादेः पितृतोऽपि वा शिक्षितविद्यानां. यद्वित्तं, शौर्य्यात् प्राप्तं विद्ययैव प्राप्तं तद्विद्याधनं विभाज्यं बृहस्पतिरब्रवीदित्यर्थः ।

विभाज्यविद्याधनेऽपि भागाधिक्यमर्जकस्यास्ति । येन चैषां स्वयमुपार्जितं स्यात् द्व्यंशमेव हरेदिति वशिष्ठस्मरणात् । गौतमस्त्वविभाज्यविद्याधनेष्वंशदानमर्जकेच्छया क्वचिदाह । वैद्यो

वैद्येभ्यः कामं दद्यादिति। वैद्येभ्योविद्यावद्भ्यः। नारद-स्त्विच्छाशून्यो न दद्यादित्याह। वैद्यो वैद्याय नाकामो दद्यादंशं स्वकाद्धनात्। पितृद्रव्यं समाश्रित्य नचेत्तेन तदाहृतं। पूर्व्वार्द्धं स्वकाद्धनादिति सामान्येनोक्तं तदविद्याधनविषयमिति उत्तरार्द्धे-नावगन्तव्यं। अविद्याय सकामिकोऽपि न दद्यात् तथाच कात्या-यनः, ना विद्यानान्तु वैद्येन देयं विद्याधनं क्वचित्, समविद्याधिका-नान्तु देयं वैद्येन तद्धनं। अवैद्यानां न क्वचिद्देयं सकामेनापि न देयमित्यर्थः। शौर्य्यधनन्तु तेनैव निरूपितं। आरुह्य संशयं यत्र प्रसभं कर्म्म कुर्व्वते तस्मिन् कर्म्मणि तुष्टेन प्रसादः स्वामिना कृतः। तत्र लब्धन्तु यत् किञ्चिद्धनं शौर्य्येण तद्भवेदिति। प्रसभो बलात्कारः।

अन्यदप्यविभाज्यमाह सएव। ध्वजाहृतं भवेद्यत्तु विभाज्यं नैव तत् स्मृतमिति। ध्वजाहृतपदप्रतिपाद्यमप्युक्तं तेनैव। संग्रामादाहृतं यत्तु विद्राव्य द्विषतां बलं। स्वाम्यर्थे जीवितं त्यक्ता तद्ध्वजाहृतमुच्यते। एतदपि शौर्य्यशब्देनैव व्यासेनाभि-हितं तद्विशेषितत्वात् कात्यायनेनतु भेदेन ध्वजाहृतस्याभिधानं प्रपञ्चनार्थमिति मन्तव्यं।

अत्रापि विद्याप्राप्तवदविभाज्यत्वे पित्राद्यविभक्तधनानुपयोगे-नार्जनं प्रयोजकमित्यवगन्तव्यं अतएव तदुपयोगेनार्जिते विषम-विभागेन विभाज्यं भवतीत्याह व्यासः। साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधं। शौर्य्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः। तस्य भागद्वयं देयं शेषास्तु समभागिन इति। साधा-रणमविभक्तानां धनं। भ्रातृग्रहणमविभक्तोपलक्षणार्थं। तस्य साधारणधनाश्रयणादर्जकस्येत्यर्थः।

शौर्य्यादिनेति वदन्नन्यत्रापि धने कन्यागतवैवाहिकादौ साधारणं धनमनाश्रित्य विवाहेन प्राप्ते विभाज्यत्वं दर्शयति। कन्यागतवैवाहिकयोः स्वरूपमाह कात्यायनः। यल्लब्धं दानकालेतु सजात्या कन्यया सह, कन्यागतं तु तद्वित्तं एतत् वृद्धिकरं स्मृतमिति। वैवाहिकन्तु तद्विद्यात् भार्य्यया यत् समागतं। धनमेवंविधं सर्व्वं विज्ञेयं धर्म्मसाधकमिति। कन्यागतं कन्यया सहागतं।

स्त्रीधनस्य सर्व्वधनस्याप्यविभाज्यत्वमाह सएव। शौर्य्यप्राप्तं विद्यया च स्त्रीधनञ्चैव यत् स्मृतं। एतत् सर्व्वं विभागेतु न विभाज्यं तु रक्थिभिः। वृहस्पतिरप्यविभाज्यमाह। पितामहपितृभ्यां तु दत्तं मात्राच यद्भवेत्। तस्य तन्नापहर्त्तव्यं शौर्य्यभार्य्याधनं यथा। मातृदत्तेतु विशेषमाह नारदः मात्राच स्वधनं दत्तं यस्मै स्यात् प्रीतिपूर्व्वकं, तस्याप्येष विधिर्दृष्टो मातापीष्टे यथा पिता। स्वधन इति शेषः। एष विधिः पितृदत्तोक्तविषयो विधिः। एवं मित्रदत्तादिकमपि न विभाज्यं तथाच याज्ञवल्क्यः। पितृद्रव्याविरोधेन यदन्यत् स्वयमर्जितं मैत्रमौद्वाहिकञ्चैव दायादानां न तद्भवेदिति। मैत्रमौद्वाहिकञ्चैव माधुपर्किकमेव चेति मनुना माधुपर्किकस्याप्यविभाज्यत्वमुक्तं। पितृद्रव्याविरोधेन यदन्यत् स्वयमर्जितमिति। अस्यार्थो मनुना स्पष्टीकृतः। अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्ज्जयेदिति। उभयत्रापि पितृग्रहणं अविभक्तोपलक्षणार्थं। श्रमेण श्रमजनितेन कृष्यादिनेति यावत् अनुपघ्नन्नपीड़यन्। व्यासोऽपि अनाश्रित्य पितृद्रव्यं स्वशक्त्याप्नोति यद्धनं दायादेभ्यो न तद्दद्यादिति। अनाश्रित्य अर्ज्जनसिद्ध्यर्थमिति शेषः। पितृग्रहणमविभक्तोपलक्षणार्थ-मत्रापि।

प्रजापतिरपि। विद्याशौर्य्यश्रमैर्लब्धं स्त्रीधनं माधुपर्क्किकं, मैत्र-कौद्वाहिकं भ्रातृ भ्रातृभिर्न विभाज्यते। श्रमः कृष्यादिः।

एवं पूर्व्वपुरुषक्रमायातं परापहृतं स्वशक्त्याभ्युद्धृतं द्रव्यं दायादेभ्यो न दद्यात्। क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः दायादेभ्यो न तद्दद्यादिति याज्ञवल्क्यस्मरणात्। द्रव्यं भूव्यतिरिक्तं। भूद्रव्ये त्वाह शङ्खः। पूर्व्वनष्टान्तु यो भूमिमेकश्चाभ्युद्धरेत् क्रमात् यथाभागं लभन्तेऽन्ये दत्त्वांशन्तु तुरीयकं। क्रमादभ्यागतानां पुत्रपौत्रादीनां मध्ये यः पूर्व्वनष्टां परापहृतां स्वशक्त्याभ्युद्धरेत् तस्मै तच्चतुर्थांशं दत्त्वा शेषमुद्धारकेण सहान्ये विभजेरन्नित्यर्थः। केचिदभ्युद्धृतं त्वमेव गृहाणेत्यन्यानुमतिमन्तरेणाभ्युद्धृतं भूम्यादि सर्व्वद्रव्यविषयमेतद्वचनं। याज्ञवल्क्यवचनन्तु अन्यानुमत्याभ्युद्धृतभूम्यादि सर्व्वविषयमिति वदन्ति, यदत्र युक्तं तद्ग्राह्यं।

परेणापहृतस्य तु भूम्यादिद्रव्यस्य उद्धारे व्यासेनोक्तं। कृते कृते वा विभागे च्छक्यो यत्र प्रवर्त्तते सामान्यन्नेद्भावयति तत्र भागहरस्तु सः। परापहृतं विभाज्यधनं यो च्छक्यी साधयति स तत्र साधिते धने द्व्यंशः स्यादित्यर्थः। अन्यदप्यविभाज्यमाह मनुः वस्त्रं पत्र मलङ्कारं कृतान्न मुदकं स्त्रियः। योगक्षेमप्रचारञ्च न विभाज्यं प्रचक्षते। वस्त्रमविभक्तप्रावृतं. वस्त्रं यच्चाङ्गयोजितमिति कात्यायनस्मरणात्। पत्रारूढ़स्तेणं धनं पत्रनिविष्टमिति तेनैव व्यक्तमुक्तत्वात्। स्त्रियो दास्यः। उदकं स्वनिवेशस्य कूपवाप्याद्यम्भः। योगक्षेमशब्दौ लौकाक्षिणा व्याख्यातौ, क्षेमं पूर्त्तं योगमिष्ट मित्याहु स्तत्त्वदर्शिनः। अविभाज्ये च ते प्रोक्ते इति। अथवा योगक्षेमार्थमुपासितेश्वरसकाशात् यो रिक्थानां लाभः सएवात्र योगक्षेमशब्देनोच्यते, प्रचारशब्देन

गोप्रचार उच्यते। कात्यायनेन गोप्रचारस्येति विशेषितत्वात्। अथवा प्रचारशब्देनाङ्गनादिकमुच्यते, प्रचक्षते विचारहीनाः केचन स्मृतिकारा इति शेषः। अतएव वृहस्पतिः, वस्त्रादयो ऽविभाज्या ये ऽप्युक्ता स्तै र्न विचारितं, धनं भवेत् समृद्धानां वस्त्रालङ्कारसंश्रितं। युक्त्या विभजनीयन्तु दन्यथानर्थकं भवेदिति। यद्यपि वस्त्रादावेकस्मिन् विचारणेन विभागे क्रियमाणे वस्तुनाशः। ऋणलेख्येतु तत्प्रमाणनाशः क्रतान्ने प्रभूते ऽविभज्यमाने स्वल्पाशनभोक्तृभागे तन्नाशः कूपादौतु दुष्करो विभाग इति अविभाज्यत्वमेव प्रतिभाति तथापि यथा वस्तुनाशाद्यनवतारः तथैव युक्त्या विभजनीयं अन्यथा साधारणतया अवस्थिते सति असूयया परस्परभोगप्रतिबन्धे कस्यचिदप्युपकाराभावात् अनर्थकं भवेदित्यर्थः।

युक्त्या विभजनप्रकारोऽपि तेनैव प्रपञ्चितः। विक्रीय वस्त्राभरणमृणमुद्गाह्य लेखितं। क्रतान्नञ्चाक्रतान्नेन परिवर्त्त्य विभज्यते। उद्धृत्य कूपवाप्यम्भः पर्य्याप्तेनैव गृह्यते। एकां स्त्रीं कारयेत् कर्म्म यथांशेन गृहे गृहे। बह्वाः समांशतो देया दासानामप्ययं विधिः। योगक्षेमवतो लाभः समत्वेन विभज्यते। प्रचारश्च यथांशेन कर्त्तव्यो ऽक्रर्थिभिः सदेति। ऋणमुद्गाह्य अधमर्णसकाशादादाय तदनुसारेण स्वभागानुसारेणेत्यर्थः।

एवञ्च यदुक्तमुशनसा, अविभाज्यं सगोत्राणा मासहस्रकुलादपि, याज्यं क्षेत्रञ्च पत्रञ्च क्रतान्नमुदकं स्त्रिय इति। एतदप्यनादृत्य युक्त्या याज्यं क्षेत्रञ्च विभजनीयं, तथाहि याज्यसकाशादुत्पन्नलाभो विभजनीयः। क्षेत्रञ्चाखिलदायादानुमत्या विभजनीयं। दायादै र्नाभ्यनुज्ञातं यत्किञ्चित् स्थावरे क्रतं। तत् सर्व्वमक्रतं ज्ञेयं यद्येकोऽपि न मन्यत इति प्रजापतिस्मरणात्।

यत्पुन स्तेनैवोक्तं । गृहक्षेत्राणि याज्यास्च प्रसादो यश्च पैतृकः, मातृकस्य प्रसादो य स्तद्विभागो न विद्यत इति। तत्र तद्विभागनिषेधमाहत्यैव युक्त्या पूर्व्वोक्तप्रकारेण गृहादिकं विभजनीयं, तथाच कात्यायनः। दृश्यमानं विभज्येत गृहं क्षेत्रं चतुष्पदमिति गृहादेरपि विभागमाह। पितृप्रसादलब्धस्य निषेधोऽप्यस्थावरे अनादेयएव, पितृप्रसादात सिध्यन्ति वस्त्राण्याभरणानिच, स्थावराणि न सिद्ध्यन्ति प्रसादे पैतृके सतीति वृद्धयाज्ञवल्क्यस्मरणात् ।

यत्पुन स्तेनैव स्मृतं, कौले रिक्थविभागेऽपि न कश्चित् प्रभुतामियात्, भोगएव तु कर्त्तव्यो न दानं नच विक्रय इति। कौले कुलक्रमायाते स्थावरादौ न कश्चित् पित्रादिरपि रिक्थविभागेऽपि शब्दात् विक्रयादावपि न प्रभुतामियात् तेन तत्र दायादानुमतिमन्तरेण विभागविक्रयाधानानि न कुर्य्यादिति तस्यार्थः।

इति स्मृतिचन्द्रिकाया मविभाज्यनिरूपणं।

---

## पुत्रपौत्रादि विभागकल्पना।

अथ पुत्रपौत्रादिभागकल्पनाविषयाणि कानिचि द्वचनानि लिख्यन्ते।

तत्र याज्ञवल्क्यः। प्रमीतपितृकाणान्तु पितृतो भागकल्पनेति। प्रमीता अविभक्ताः पितरो येषां भ्रातृणां ते प्रमीतपितृका स्तेषां पितृतो भागकल्पना पितृद्वारेणैव पितृपितामह प्रपितामह द्रव्यभागकल्पना न पुनः स्वरूपेणेत्यर्थः।

पितृतो भागकल्पनायां को विशेष इत्यपेक्षिते बृहस्पतिः। तत्पुत्रा विषमसमाः पितृभागहराः स्मृता इति। तत्पुत्राः प्रमीतपितृकाणां एकैकस्य पुत्राः विषमसमाः न्यूनाधिकसंख्यकाः स्वं स्वं पैतृकं भागमेव लभन्त इत्यर्थः। एतदुक्तं भवति. कस्यचित् प्रमीतस्य एकएव पुत्रः, कस्यचिद्द्वौ, कस्यचिद्बहव, तत्र यद्येकः पितृभागहर, स्तथैव द्वावपि स्वपितृभागहरौ। बहवोऽपि स्वपितृभागमात्रहरा एवेति।

यद्यपि पितृभागमात्रहरत्वेनानेकपितृकाणां पितृतो भागकल्पना स्वव्याननुरूपा तथापि वाचनिकत्वादनुमन्तव्या।

यदा सुतयो रविभक्तयो र्भ्रात्रो र्मध्ये कश्चिज्ज्ञाता म्रृतः तत्सुतस्तु पितामहादप्राप्तांशकः पितामहोपि नासीत् तदा कात्यायनश्चाह। अविभक्ते ऽनुजे प्रेते तत्सुतं रिक्थभागिनं कुर्व्वीत जीवनं येन लब्धं नैव पितामहात्, लभेतांशं सपित्र्यन्तु पितृव्यात् तस्य वा सुतात् दिति। जीवनं दायधनं, अनुजग्रहणं भ्रातुरुपलक्षणार्थं।

अस्मिन्नेव विषये यदा प्रमीतस्य सुता बहव स्तदाप्याह सएव। स एवांशन्तु सर्व्वेषां भ्रातृणां न्यायतो भवेदिति। समं स्यादश्रुतत्वादिति न्यायेन मिथः समभागतया भवेदित्यर्थः।

यदपरं सएवाह। लभेत तत्सुतो वापि निवृत्तिः परतो भवेदिति। तस्यायमर्थः तस्य विभाज्यधनस्वामिपौत्रस्य सुतोऽपि वा स्वपितुरभावे तद्भागं, लभेत अथ तस्याप्यभावः किन्तु तत्सुतादेरेव विद्यमानता तदातु मृतभ्रातृसन्ततौ वृद्धप्रपितामहधनभाग ग्रहणनिवृत्तिरिति।

नन्वप्रपौत्रस्यापि प्रपितामहधनभागग्रहणमपि कथं संघटते

जन्मनापि पितृपितामहयोरेव धने पुत्रपौत्रयोरेव स्वत्वसिद्धि-नियमात्, सत्यं तथापि यथा पुत्रादे र्मातृधने पिण्डं दत्त्वैव मातुरूर्द्ध्वं स्वत्वसिद्धि र्भवतीति वच्यते तथा प्रपितामहधने प्रपौत्रस्यापि स्वत्वसिद्धिरिति युक्तमुक्तं लभेत तत्सुतो वापीति । एवञ्च यो यस्य धनस्वामिनः प्रमीतस्य पितृत्वेन पितामहत्वेन प्रपितामहत्वेन वा पिण्डदाता तस्य तद्धनभागित्वं धनस्वामिनः सत्वत्य तरयास्तित्वेऽपि विद्यत इत्यवगन्तव्यं । अतएव देवलः सममिच्छन्ति पिण्डानां दायार्थस्य विभाजनमिति । आचतुर्था द्दायादार्थस्य विभागः पिण्डदातृत्वं च मन्वादय इच्छन्तीत्यर्थः । तथाच सएव, अविभक्तविभक्तानां कुल्यानां वसतां सह। भूयोदाय-विभागः स्या दाचतुर्थादिति स्थितिः। तावत् कुल्याः सपिण्डाः स्युः पिण्डभेदस्ततः परमिति । अविभक्तविभक्तानां अविभक्तधनानां विभिन्नसन्ततिजातानां कूटस्थकुल्यानां भूयश्चिरं सहवसतां आचतु-र्थात् कूटस्थप्रपौत्रपर्य्यन्तदायधनविभागः स्यादित्यनेकसन्ततिव दायविभागमर्य्यादेयमित्यर्थः । जीवत्पितृकस्य पुनः पित्रा सह कथं पैतामहधनविभाग इत्यपेक्षिते कात्यायनः । पैतामहं समानं स्यात् पितुः पुत्रस्य चोभयोरिति । व्यासोऽपि, द्रव्ये पितामहोपात्ते जङ्गमे स्थावरे ऽपिवा, सममंशित्वमाख्यातं पितुः पुत्रस्य चैवहि । याज्ञवल्क्योऽपि, भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा तत्र स्यात् सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः । निबन्धः क्रमतया याचकादिभिः पण्यादिषु गृह्यमाणोंऽशः । सदृशं स्वाम्यं स्यादित्यनया वचोभङ्ग्या समानांशित्वमेवोक्तमिति मन्तव्यं । अन्यथा पूर्वोक्त-वचनसमानार्थतास्वरसत उक्ता न स्यात् । एवञ्च जीवद्विभागेऽपि पितामहादि धनविषये विषमविभागो न कदाचिदपीति मन्तव्यं ।

स्वार्जित धनविषये तु विषमविभागोऽपि युगान्तरे कदाचिदस्तीति जीवद्विभागप्रकरणे ऽभिहितं।

केचित्तु यथाश्रुतार्थतामेवास्य वचनस्याङ्गीकुर्व्वते तथाच पौत्रमात्रेच्छयापि पितामहधनविभागोऽपि भवति पितुरिच्छामात्रेण च क्रमायातधनादिकं वा भवति तत्र पौत्रस्यापि स्वाम्यसाम्याभिधानादित्याहुः। तदपि ग्राह्यं समञ्जसत्वात्।

अर्थे पैतामहेऽपि पितापुत्रयो स्तुल्यं स्वाम्यमिति विष्णुनाप्युक्तत्वात्। अत्रार्थादतुल्यस्वाम्यं पितापुत्रयोः पितृधनमिति गम्यते। ननु पैतामहे पैतृकेच जन्मनैव स्वाम्यमिति कात्र तुल्यातुल्यता, उच्यते। पैतामहे धनेऽपि पितापुत्रयोः स्वाम्यं स्वातन्त्र्यमेव तुल्यता, पैतृकेतु जीवति पितरि निर्द्दोषे तस्यैव स्वातन्त्र्यमित्यतुल्यता अनेनैव भेदेन स्वाम्ये तुल्यातुल्योक्तिः।

यत्तु कात्यायनोक्तं। स्वयञ्चोपार्जिते पित्रा न पुत्रः स्वाम्य मर्हतीति। तत् पुत्रमात्रेच्छया पैतृके धने विभागानर्हतां वचोभङ्ग्या वक्ति, न पुन र्यथाश्रुतार्थपरमित्यनवद्यं।

व्यासेन तु सुस्पष्टमेवोक्तं। पैतृके न विभागार्हाः पुत्राः पितुरनिच्छत इति। यत्पुन र्बृहस्पतिनोक्तं। पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्जितं। विद्याशौर्य्यादिनावाप्तं तत्र स्वाम्यं पितुः स्मृतमिति। तत्रापि स्वाम्यमिति वचो भङ्ग्या पितुः स्वातन्त्र्यमुक्तमिति मन्तव्यं।

स्वातन्त्र्याभिधानस्य, प्रयोजनमप्याह सएव। प्रदानं स्वेच्छया कुर्य्यात् भोगं कुर्य्यात्ततो धनात्। तदभावे तु तनयाः समांशाः परिकीर्त्तिता इति। सुतानुमतिमन्तरेणापि पितुः स्वातन्त्र्यबलात् दानादिकं जीवद्विभागोक्तविषयविशेषे विषमविभागकल्पनञ्च

युज्यतइति तात्पर्य्यार्थः। स्वार्जितप्रायं यत् क्रमायातं यच्च स्वार्जितपितृधनं तद्विभागे पुत्रे र्ब्बलात्कारो न कार्य्य इति वचोभङ्गीत्याह कात्यायनः। स्वशक्त्यापहृतं नष्टं स्वयमाप्तञ्च यद्भवेत्। एतत् सर्व्वं पिता पुत्रे र्व्विभागे नैव दाप्यते। यत् परै रपहृतं क्रमायातं स्वशक्त्या उद्धृतं यच्च नष्टं वा क्रमायातं, स्वेनैव लब्धं यच्च शौर्य्यादिना स्वयमर्जितं एतत् सर्व्वं पिता, विभागे पुत्रे र्न दाप्य इत्यन्वयः।

इति स्मृतिचन्द्रिकायां पुत्रपौत्रादि विभागकल्पनाविषयाणि।

---

## स्त्रीधनविभागः।

### अथ स्त्रीधनविभाग विषयाणि।

तत्रादौ तावत् स्त्रीधनभेदानाह मनुः। अध्यग्न्यध्यावाहनिकं दत्तञ्च प्रीतिपूर्व्वकं भ्रातृमातृपितृप्राप्तं षड् विधं स्त्रीधनं स्मृतं। अत्र पूर्व्वार्द्धस्यार्थः कात्यायनेन विवृतः। विवाहकाले यत् स्त्रीभ्यो दीयते ह्यग्निसन्निधौ। तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्त्तितं। यत् पुन र्लभते नारी नीयमाना पितुर्गृहात्। अध्यावाहनिकञ्चैव स्त्रीधनं तदुदाहृतं। प्रीत्या दत्तञ्च यत्किञ्चित् श्वश्र्वा वा श्वशुरेण वा, पादवन्दनिकञ्चैव प्रीतिदत्त न्तदुच्यते। पादवन्दनिकं पादवन्दनाद्यवसरे दत्तं। भ्रातृ मातृ पितृ प्राप्तं यदा कदा वा जीवनार्थमिति शेषः। षड् विधग्रहणमुत्तरार्द्धोक्तमिकमेव स्त्रीधनमिति भ्रमापनुत्त्यर्थं कृतं न पुनरव-

धारणार्थं। अतएव पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतं। आधिवेदनिकाद्यञ्चेति याज्ञवल्क्येनाद्यग्रहणं कृतं। विष्णुनातु षड् विधाधिकमुक्तं। पितृमातृसुतभ्रातृ-दत्तमध्यग्न्युपागतं। आधिवेदनिकं बन्धुदत्तं शुल्कान्वाधेयकमिति स्त्रीधनमिति। आधिवेदनिकं अधिवेदननिमित्तं। बन्धुदत्तमित्यत्र बन्धुशब्दः पूर्व्वोक्तपित्रादिव्यतिरिक्तबन्धुषु गोवलीवर्द्दन्यायात् वर्त्तते।

शुल्कान्वाधेययोः स्वरूपं कात्यायनेनोक्तं।

गृहोपस्करवाह्यानां दोह्याभरणकर्म्मिणां मूल्यं लब्धं तु यत्किञ्चित् शुल्कं तत् परिकीर्त्तितं। विवाहात् परतो यत्तु लब्धं भर्त्तृकुलात् स्त्रिया। भर्त्तुः पित्रोःसकाशाद्वा ह्यन्वाधेयन्तु तद्भृगुरिति। मूल्यं गृहोपस्करादीनां मूल्यं, लब्धं कन्याधनत्वेन, वरादिसकाशात् कन्यार्पणोपाधितयेति शेषः। पितृमात्रादिभि र्जीवनार्थं स्त्रियै दाने विशेषमाह सएव। पितृमातृपतिभ्रातृज्ञातिभ्यः स्त्रीधनं स्त्रियै। यथाशक्ति द्विसाहस्रं दातव्यं स्थावरादृते इति। यथाशक्ति स्थावरव्यतिरिक्तं द्विसाहस्रं द्विसाहस्रकार्षापणपर्य्यन्तं दातव्यमित्यर्थः। व्यासोऽपि द्विसाहस्रपरो दायः स्त्रियै देयो धनस्य चेति, दीयतइति दायः, परः परमः, एवञ्च द्विसाहस्रकार्षापणाधिकमूल्यो धनस्य भागो जीवनार्थं न समृद्धानामपि देयइत्यवगम्यते। स्त्रियै देयइत्यत्र प्रत्यब्दमिति विधेयसंख्यायोग्यताबलादवगम्यते, ततश्च प्रत्यब्दमसकृदर्पणनियमोऽयं। अनेनाब्देषपजीवनार्थं सकृदेव दानेतु नायमवधिनियमो नापि स्थावरपर्य्युदासः।

यत्तु उत्सवादावेव धार्य्यमित्येवमाद्युपाधिना अलङ्कारादि दत्तं, यच्च दायादादिवञ्चनार्थं दत्तं तत् स्त्रीधनं न भवतीत्याह

कात्यायनः। यच्च सोपाधिकं दत्तं यच्च योगवशेन वा पित्रा भ्रात्राथवा पत्या न तत् स्त्रीधनमिष्यते। योगवशेन वञ्चनाद्युपाधितयेत्यर्थः।

नन्पाधिवञ्चनयोरभावेऽपि पित्रादिना दत्तं न तत् स्त्रीधनं भवितुमर्हति। भार्य्या पुत्रश्च दासश्च निर्द्धनाः सर्व्वएव ते। यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनमिति स्मरणात्, नैवं पुत्रादिसाहचर्य्यात् नानेन परमार्थतो निर्द्धनत्वं भार्य्याया गम्यते किन्तु धनव्ययादावस्वातन्त्र्यमात्रं। तेन यस्यैते तस्यानुज्ञया स्वधनस्यापि विनियोगं कुर्य्युरिति स्मृतिवाक्यस्य तात्पर्य्यमवसेयं। अतएवोक्तं मनुना न निर्हारं स्त्रियः कुर्य्युः कुटुम्बा द्बहुमध्यगात्। स्वकादपि च वित्ताद्धा स्वस्य भर्त्तुरनुज्ञया। स्वतन्त्रानुज्ञया परतन्त्राः स्त्रियः स्त्रीपुंससाधारणवित्तात् आत्मीयवित्ताद्वा त्यागभोगादिकं न कुर्य्युरित्यर्थः।

अथवा निर्द्धनत्वाभिधायकस्मृतिवाक्यस्य शिल्पादिप्राप्त धनविषयत्वं ज्ञेयं। यदाह कात्यायनः प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः। भर्त्तुः स्वाम्यं तदा तत्र शेषन्तु स्त्रीधनं स्मृतं। अन्यतः सख्यादितः प्राप्तस्य स्त्रीधनत्वेन विशेषकारित्वात्।

इति स्मृतिचन्द्रिकायां स्त्रीधनभेदाः।

---

अथ स्त्रीधनकर्त्तं।

तत्रव्यासः। यच्च भर्त्रा धनं दत्तं सा यथाकाममाप्नुयादिति। च शब्दात् सौदायिकञ्च। यथाकाममिति वदन् भर्त्तृदायादौ

स्वातन्त्र्यं दर्शयति। कात्यायनोऽपि। सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते। यस्मा त्तदानृशंसार्थं तैर्दत्त मुपजीवनं। सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्त्तितं विक्रये चैव दानेच यथेष्टं स्थावरेष्वपि। भर्त्तृदायं मृते पत्यौ विन्यसेत् स्त्री यथेष्टतः विद्यमानेतु संरक्षेत् चपयेत्तत्कुलेऽन्यथा इति। द्वितीयश्लोकेन सौदायिकाख्यस्त्रीधने पत्यौ विद्यमानेऽपि स्वातन्त्र्यमुक्तं सदेत्यभिधानात्। भर्त्तृदायो भर्त्तृदत्तं। तन्मध्येतु तदनन्तरोक्तपादद्वयेनाविद्यमाने पत्यौ स्वातन्त्र्यमुक्तं, विद्यमानेतु संरक्षेदित्यभिधानात्। संरक्षेत् भर्त्तृदत्तं भर्त्राज्ञया विना न विन्यसेदित्यर्थः।

सौदायिकञ्च तेनैव निरूपितं। ऊढ़या कन्यया वापि पत्युः पितृगृहेऽपि वा। भर्त्तुः सकाशात् पित्रोर्व्वा लब्धं सौदायिकं स्मृतं। लब्धं धनमिति शेषः। तथाच व्यासः। यत् कन्यया विवाहेच विवाहात् परतश्च यत्। पितृभर्त्तृगृहात् प्राप्तं धनं सौदायिकं स्मृतं। एतद्वचनद्वयेनैतदुक्तं। वाग्दानप्रभृति पतिगृहप्रवेशार्थैवोत्सवसमाप्तिपर्य्यन्तं पितृगृहे पतिगृहे वा पितृपक्षत एव स्त्रिया लब्धं यौतकादि धनं सौदायिकशब्दाभिधेयमिति। ननु सौदायिकन्तु यद्देयं सुदायो हरणञ्च तदिति निघण्टुपाठात् कथं सौदायिकशब्दोऽत्र प्रयुक्तः। स्वार्थे तद्धितान्ततयेत्यनवद्यं।

भर्त्तृदायेतु, मृते भर्त्तरि न स्थावरे स्वातन्त्र्यं। तथाच नारदः। भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन् मृतेऽपि तत्, सा, यथाकाममश्नीया द्द्याद्वा स्थावरादृते इति। भर्त्तरि मृतेऽपि न तत्स्थावरे स्वातन्त्र्यमित्यर्थः। यथाकाममित्यनेन स्वातन्त्र्यमुक्तं।

तत्र सौदायिके स्थावरेतरपतिदत्ते च स्त्रीणां स्वातन्त्र्यं अन्यत्र स्त्रीधनेऽप्यस्वातन्त्र्यमिति मन्तव्यं।

पुरुषाणान्तु भर्त्रादीनां स्त्रीधने सर्व्वत्रास्वातन्त्र्यमेव, यथाह। कात्यायनः। न भर्त्ता नैव च सुतो न पिता भ्रातरो नच। आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः। स्वामित्वाभावादित्यभिप्रायः। अतएवानन्तरमुक्तं तेनैव। यदि ह्येकतरो ह्येषां स्त्रीधनं भक्षयेद्बलात् सवृद्धिकं स दाप्यः स्यात् दण्डञ्चैव समाप्नुयात्। तदेव यद्यनुज्ञाप्य भक्षयेत् प्रीतिपूर्व्वकं मूलमेव प्रदाप्यः स्याद्यद्यसौ धनवान् भवेत्। धनवान् यदि भवेदित्यभिधानात् मूलमात्रमपि निर्धनो न दाप्य इत्यर्थात् गम्यते। अनुज्ञाप्य भक्षणेऽपि मूलधनाभिधानात् भर्त्रादीनामस्वामित्वमवगम्यते न पुनः पारतन्त्र्यमात्रं। एवञ्च विवाहेन भार्य्याया भर्त्तृधने नित्यपरतन्त्रस्वामित्वं सम्पद्यते न पुन भर्त्तु र्भार्य्याधने तादृशमपीत्यवगन्तव्यं। अतएव भर्त्तुः स्त्रीधनभोगे ऽप्यनर्हतामाह देवलः। वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत्। भोक्तुं तत् स्वयमेवेदं पति र्नार्हत्यनापदि। वृथा मोक्षे च भोगे च स्त्रियै दद्यात् सवृद्धिकमिति। वृत्ति र्व्वर्त्तनार्थं पित्रादिना दत्तं। लभ्यतइति लाभः। एतदुक्तं भवति पार्व्वत्यादिप्रीत्यर्थं व्रतादौ यत् स्त्रिया लभ्यते तदपि स्त्रीधनमिति। स्वयमेवेत्येवकारः स्वापत्यानां व्युदासार्थः। पत्यु र्व्युदासस्तु पति र्नार्हतीत्यनेन सिद्धत्वात्। पत्युर्व्युदासेन ततो बहिरङ्ग भ्रात्रादिव्युदासस्य च दण्डापूपन्यायसिद्धत्वात्। वृथा आपदं विनेत्यर्थः। मोक्षस्त्यागः। स्त्रियाननुज्ञातबलात्कारकृतत्यागभोगविषयमेतत्, सवृद्धिकप्रदानस्य दण्डसहितस्याभिधानात्। पति र्नार्हत्यनापदीति वदन् आपदितु पति-

रेवार्हति स्त्रीधनं भोक्तुं नान्य इति दर्शयति। अतएव पुत्रार्त्ति-हरणेवापि स्त्रीधनं भोक्तुमर्हतीत्यनन्तरवचने भोक्तुमर्हतीत्यत्र पतिरिति शेषो द्रष्टव्यः। पुत्रग्रहणं कुटुम्बोपलक्षणार्थं। आर्त्ति धनालाभनिमित्तो दुःखपनोदात्र विवक्षिता। तस्या हरणे परि-हरणे, वाशब्दादन्यत्रापि धनालाभनिमित्तो दुष्परिहारमहा-सङ्कटे स्त्रीधनमननुज्ञातमपि पति र्भोक्तुं वार्हतीत्युक्तं। ननु परधनत्यागे भोगेच परस्य स्वाम्यनुज्ञया विना कथमर्हता, उच्यते। स्वाम्यनुज्ञाभावेऽपि पूर्व्वोक्तविषये, स्वाधीनजनस्वामिकेतु स्त्रीधने यथेष्टविनियोगार्हे व्यापदपनोदक त्यागभोगादावनुमतास्तीत्यस्मादेव वचनात् कल्प्यतइत्यदोषः। अत्र याज्ञवल्क्यः। दुर्भिक्षे धर्म्म-कार्य्ये वा व्याधौ सम्प्रतिरोधके गृहीतं स्त्रीधनं भर्त्ता न स्त्रियै दातु-मर्हति। धर्म्मकार्य्ये नित्ये नैमित्तिके वा, काम्येऽपि क्वचित् शान्तिके ग्रहयज्ञादौ, संप्रतिरोधके धनदानं विना निवारयितुमशक्ये धनि-काद्यासेधादौ, गृहीतं स्त्रीधनं गत्यन्तराभावेनेति शेषः। सति सम्भवे प्रतिदानस्यात्रावश्यकत्वात्। अतएव प्रतिदानस्य क्वचि-देवानावश्यकत्वमुक्तं कात्यायनेन, व्याधितं व्यसनस्थञ्च धनिकै रुपपीड़ितं। ज्ञात्वा विसृष्टं यत् प्रीत्या दद्यादात्मेच्छया तु सः। ज्ञात्वा स्त्रियेति शेषः। विसृष्टं अनुज्ञातं। यद्यपीदं वचनं, न भर्त्ता नैवच सुत इत्यादिवचनानन्तर्य्यतो भर्त्रादिविषयमिति प्रतिभाति, तथापि अथचेत् स द्विभार्य्यः स्यान्नच तां भजते पुनः प्रीत्या निसृष्टमपि चेत् प्रतिदाप्यः स तद्बलात्। ग्रासाच्छादन-वासाना मुच्छेदो यत्र योषितः तत्र स्वमाददीत स्त्रीत्युपरितन-वचनपर्य्यालोचनया भर्त्रैकविषयमिति मन्तव्यं।

या पुनरतिदुष्टा स्त्री सा स्वधनमनिसृष्टमपि विनियोक्तुं

तीत्याह सएव। अपकारक्रियायुक्ता निर्लज्जा चार्थनाशिका चारता याच स्त्रीधनं नच सार्हति। स्वेच्छया विनियोक्तु-त शेषः। भर्त्रा प्रतिश्रुतं त्वगृहीतमपि देयं, भर्त्रा प्रतिश्रुतं ऋणवत् स्त्रीधनं सुतैरिति तेनैवोक्तत्वात्। सुतग्रहणं, पौत्र-द्युपलक्षणार्थं ऋणवदित्यभिधानात्। अनेनापि स्त्रीधने ादीनां नास्ति स्वाम्यमिति गम्यते। ततश्च स्त्रीधने जीवद्धि-गे भागो नास्त्येव स्त्र्येकस्वामिकत्वात्। अतएव मनुः। जीव-ीनान्तु ताखां ये तद्धरेयुः सबान्धवाः, तान् शिष्याच्चौर-डेन धार्म्मिकः पृथिवीपतिः। पत्यौ जीवति यः स्त्रीभि रल-ारो धृतो भवेत्। न तं भजेरन् दायादा भजमानाः पतन्ति इति। धृतः स्वातन्त्र्येणेति शेषः, स्वातन्त्र्येण धृतो योगोपधि-हित्येन स्त्रीधनत्वनिश्चयो भवति। पूर्व्वार्द्धस्य निश्चितमिश्रित-ीधनकथनार्थत्वात्। स्वातन्त्र्येणेति विशेषेण भाज्यमिति गम्यते। ायादा दुहित्रादयः।

इति स्मृतिचन्द्रिकायां स्त्रीधनकृत्यं।

---

## अथ स्त्रीद्वारागतधनविभागः।

तत्र तावद्धनागमनप्रकारमाह मनुः। अन्वाधेयञ्च यद्दत्तं त्या प्रीतेन चैव यत्। पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनं वेत्। अन्वाधेयं, विवाहादूर्द्ध्वं स्त्रिया भर्त्तृकुलात् पितृकुलाच्च ब्धं। विवाहात् परतो यत्तु लब्धं भर्त्तृकुलात् स्त्रियाः अन्वाधेयन्तु-दुक्तं लब्धं पितृकुलात्तथेति कात्यायनस्मरणात्। विवाहात् परत

इत्यनेनान्वाधेयपदस्यानुशब्दार्थो विवृतः। लब्धमित्यनेन तत्र लाधेयशब्दार्थोऽभिहित इति मन्तव्यं। यदन्वाधेयं, यच्च प्रीतेन पत्यैव दत्तं, तद्विविधं स्त्रीधनं धनस्वामिन्यां मृतायां अनन्तरक्षणवर्त्तिन्याः स्त्रीपुंसप्रजायाः स्वं भवेदित्यर्थः।

एतदुक्तं भवति, सप्रजःस्त्रीधनं स्वामिमरणानन्तरक्षणजीवनशालित्वेऽपि न पत्यु र्भवति, किन्तु तच्छालिन्याः प्रजाया इति।

एवञ्चास्मादिदमवगम्यते, धनस्वामिन ऊर्द्ध धनागमे धनस्वामिमरणानन्तरक्षणजीवनक्रियैव धनग्रहणादिकारणतया धर्म्मशास्त्रप्रतिपादितधनस्य स्वत्वापत्तिकारणमिति। तेन यत्र यत्र धनस्वामिन ऊर्द्धमेव धनागमनं अनुत्तरव्यातधनागमादौ तत्र तत्र रिक्थग्राहिणः स्वत्वापत्तौ इदमेव कारणं कल्प्यं। प्रजाया इति सामान्येनाभिधानात् तत्र स्त्रीपुंसप्रजाया उक्तद्विविधरिक्थग्रहणाधिकारः समसमये जायते इति स्वत्वापत्तिरपि तदैव न पुनः पूर्व्वं भगिनीनां तदभावे भ्रातॄणाञ्च भवतीति मन्तव्यं। विभागोऽत्र भ्रातृभगिनीकर्त्तृको विज्ञेयः।

एवञ्च यदुक्तं तेनैव। जनन्यां संस्थितायान्तु समं सर्व्वे सहोदराः, भजेरन् मातृकं रिक्थं भगिन्यश्च सनाभय इति, तत् स्त्रीकान्वाधेयादि द्विविधरिक्थविषयमिति मन्तव्यं।

अस्मिन्नेव विषये विशेषमाह बृहस्पतिः। स्त्रीधनं स्यादपत्यानां दुहिताच तदंशिनी। अप्रत्ता चेत्, समूढातु लभते मानमात्रकं। अपत्यानां, पुत्रपत्यानां वचनद्वयेपीतरेतरयोगे, च शब्दः तेनात्रेतरेतरयुक्तानां विभागकर्त्तृत्वं विज्ञेयं। अतएव कात्यायनः भगिन्यो बान्धवैः सार्द्धं विभजेरन् सभर्त्तृका इति। बान्धवैः

सहोदरै र्भ्रातृभि रित्यर्थः । सभर्त्तृका इति विशेषणं विधवानिवृत्त्यर्थं, नपुनः कन्यानिवृत्त्यर्थं, पूर्व्वोक्तवचनविरोधात् ।

सहोदरभ्रातृभिः सार्द्धं ते भागहरा भगिन्यो यास्ताः प्रत्याह मनुः । यास्तासां स्यु र्दुहितर स्तासामपि यथार्हतः मातामह्या धनात् किञ्चित् प्रदेयं प्रीतिपूर्व्वकमिति । यथार्हतः शीलोपयोगदारिद्र्याद्यपेक्षयेत्यर्थः ।

ननु दुहितृदुहितॄणां भ्रातृभगिनीसद्भावे मातामहीधने स्वामित्वाभावात् किमिति किञ्चित् प्रदीयते, उच्यते । यथा पैतृके धने कन्यानां दायार्हत्वाभावेऽपि वचनबलात् ताभ्यस्तुरीयांशो भ्रातृभि र्दीयते तथात्र स्वामित्वाभावेऽपि भ्रातृभगिनीभि र्वचनबलात् किञ्चिद्दीयते । इयांस्तु भेदः । तत्र दायानर्हत्वेऽपि जन्मना स्वाम्यमस्तीत्यभिसन्धाय, पतिताः स्युरदित्सव इति दोषकीर्त्तनादवश्यं दातव्यं इह तु स्वामित्वमपि नास्तीत्यभिसन्धाय, प्रीतिपूर्व्वकमिति वचनात् प्रीतौ सत्यां देयमसत्यामदेयमिति ।

अन्यत् किञ्चित् मातृकं स्वकृथं अप्रत्तानामेव न पुनः सर्व्वासां सहोदरप्रजानां भवतीत्याह सएव । मातुस्तु यौतकं यत् स्यात् कुमारीभाग एव स इति । यौतकं समानोपवेशनप्रत्यासन्नयो र्व्वधूवरयो र्व्विवाहादौ येन केनचित् समर्पितं धनं तद्वधूवरयो र्द्देयं युतयो र्यौतकं मतमिति निघण्टुकारैरुक्तत्वात् अन्योन्यार्च्चितयोर्व्वधूवरयोर्यद्देयं तद्धनं युतयोरिति यौतकमिति व्युत्पत्त्या यौतकधनमित्यर्थः । देवस्वामीतु पितृगृहाल्लब्धं भर्त्तृगृहाल्लब्धापेक्षया पृथग्धनतया यौतकं मातृधनं नेत्याह । तच्चिन्त्यं, पक्षद्वयस्यापि कल्पनामात्रत्वात् । कुमारीणामनेकत्वे समं स्यादश्रुतत्वादिति न्यायेन यौतकविभागः कार्य्यः भागविशेषास्मृतेः ।

एवमुक्तत्रिविधातिरिक्तं मातृकं ऋक्थं कुमारीणामप्यप्रतिष्ठितानामेव न पुनः सर्व्वासां दुहितॄणामित्याह गौतमः। स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्चेति। अध्यग्न्यध्यावाहनादि स्त्रीधनं कुमारीणामप्रतिष्ठितानाञ्च दुहितॄणां स्वं भवतीत्यर्थः। ततश्च तद्धनं ताएव दुहितरो विभजेरन्नित्यभिप्रायः। अप्रतिष्ठिता अनपत्या, निर्द्धना, दुर्भगा विधवा वा एवमपरार्कानुसारात् गौतमवचनं व्याख्यातं। अस्य विज्ञानेश्वरकृता व्याख्या हेया स्वबुद्धिमात्रेणाध्याहारादिकरणात्।

अस्मिन्नेव विषये विशेषमाह याज्ञवल्क्यः। मातुर्दुहितरः शेषमृणादिति मातृकृतर्णापाकरणावशिष्टं मातृऋक्थं मातुरूर्द्ध्वमप्रत्ता अप्रतिष्ठिता दुहितरो विभजेरन्नित्यर्थः। एवम्भूतदुहित्रभावेऽप्याह सएव। ताभ्य ऋते ऽन्वय इति। एतदेव नारदः स्पष्टयति। अभावे दुहितॄणान्तु तद्वत्रन्वयएव चेति। अप्रत्तदुहितृष्वन्वयासम्भवात् प्रत्तदुहित्रन्वय इति पारिशेष्याद्गम्यते। स्त्रीगामिधनत्वात् स्त्रीरूपान्वय इति गम्यते। प्रत्तदुहितॄणां दुहितॄणां, स्त्रीरूपान्वयाभावे दौहित्राणां यथा स्यादिति सामान्येन तदन्वय इत्युक्तं। दौहित्राणामप्यभावेतु विभजेरन् सुताः पित्रो रूर्द्ध्वं ऋक्थमृणं समामिति, याज्ञवल्क्यस्मरणात् मातुरूर्द्ध्वं मातृरिक्थं मातृकृतं चर्णं समं सुता विभजेरन्नित्यवगमात् सुतानां मातृऋणधनविभक्तृत्वं। अन्यथा विभजेरन् सुताः पित्रो रित्येकशेषोक्ति रपार्थिका स्यात्। सुतानामप्यभावे पौत्राणां पितामही ऋणधनविभक्तृत्वं, पुत्रपौत्रै ऋणं देयमिति पौत्राणामपि पितामहीकृतर्णापाकरणाधिकारात् ऋक्थभाज ऋणमपाकुर्य्यु रिति स्मरणाच्च। भिन्नपितृकाणान्तु विषमसंख्यानां

पौत्राणां समवाये पितामही पितामहद्धनविभागेऽपि मातामह-धनविभागवत् पितृतो भागकल्पना। एवमेव भिन्नमातृकाणां दौहित्रीणां दौहित्राणां विषमसंख्यानां मातृतो भागकल्पना, प्रतिमातृ वा स्वे वर्गे भागविशेष इति गौतमस्मरणात्।

यत्तु उशनसैवोक्तं, दुहितृणामभावेतु रिक्थं पुत्रेषु तद्भवे-दिति तदप्रत्तदुहितृविषयं तत्रर्तुकालभर्त्तुरसम्भवेनान्वयासम्भ-वात्। एवञ्च कात्यायनोक्तं यौतकविषयमिति मन्तव्यं। भार्य्याया ऊर्द्धमन्वयाभावे भर्त्तरि भार्य्या-ऋक्थं भवेत्। अप्रजःस्त्रीधनं भर्त्तु ब्राह्मादिषु चतुर्ष्वपीति याज्ञवल्क्य-स्मरणात्, अपिशब्दात् गान्धर्व्वेऽपि। अतएव मनुः। ब्राह्मदैवा र्षगान्धर्व्वप्राजापत्येषु यद्धनं। अतीतायामप्रजसि भर्त्तुरेव तदिष्यते। उक्तपञ्चविधविवाहेषु संस्कृताया भार्य्याया यद्धनं तत्तस्या दुहित्रादिपौत्रान्तधनहारिसन्ततेरभावे सति अतीतायां भर्त्तुरेवेष्यते न पुत्र भ्रात्रादीनां बन्धूनामित्यर्थः।

यत्तु, कात्यायनेनोक्तं बन्धुदत्तन्तु बन्धूनामभावे भर्त्तृगामि तदिति। तदुक्तपञ्चविधेतरसंस्कृतस्त्रीधनविषयं। तथाच सएव। आसुरादिषु यल्लब्धं स्त्रीधनं पैतृकं स्त्रिया। अभावे तदप-त्यानां मातापित्रोस्तदिष्यते। पैतृकं मातापितृसकाशाद्दानेनागतं, तदपत्यानामभावे आसुरादिषु संस्कृतायां उत्पन्नापत्यानामभावे। अपत्यग्रहणं पूर्व्वोक्त दुहित्रादिपौत्रान्तानां स्त्रीधनहारिणामुप-लक्षणार्थं। यत्तु, यमेनोक्तं। आसुरादिषु यद्द्रव्यं विवाहेषु प्रदीयते। अप्रजाया मतीतायां पितैव तु धनं हरेदिति। अत्र प्रदीयते पित्रेति शेषो द्रष्टव्यः, ततश्च न पूर्व्वोक्तवचनविरोधः।

एवं पितृव्यमातुलादिबन्धुदत्तं स्त्रीधनं सति सम्भवेऽपि,

पितृव्यादिबन्धूनां अन्यथा भर्त्तुरेवेति आसुरादिष्ववगन्तव्यं । किञ्चिद्बन्धुदत्तं न दातु र्भवतीत्याह गौतमः । भगिनीशुल्कं सोदर्य्याणामूर्द्ध्वं मातुरिति । शुल्काख्य स्त्रीधनं पूर्व्वप्रकरणे निरूपितं । तद्दातारो वरादय स्तेषां दातृत्वेऽपि तद्धनं न भवति किन्तु धनस्वामिनी सोदर्य्यभ्रातॄणां तेषामभावे मातु र्भवतीत्यर्थः ।

यत् पुनर्हरतीत्यनुवृत्तौ शङ्खेनोक्तं, स्वं स्त्रीशुल्कं वोढेति । तदपरिसमाप्ते विवाहे सति मृतायां वध्वां द्रष्टव्यं । मृतायां दत्तमादद्यात् इति याज्ञवल्क्यस्मरणात्, दत्तं शुल्कं अलङ्कारादिकं वा आदद्याद्वेति शेषः ।

कन्याधनं प्रत्याह बौधायनः । रिक्थं मृतायां कन्यायां गृह्णीयुः सोदराः स्वयं, तदभावे तु तन्मातु स्तदभावे पितु र्भवेत् । गौणमातृपरिगणनपूर्व्वकं तद्धनहारित्वमाह वृहस्पतिः । मातुःस्वसा मातुलानी पितृव्यस्त्री पितृष्वसा । श्वश्रूः पूर्व्वजपत्नीच मातृतुल्याः प्रकीर्त्तिताः । यद्यासामौरसो न स्यात् सुतो दौहित्र एववा तत्सुतो वा धनं तासां स्वस्रीयाद्याः समाप्नुयुरिति । स्वस्रीयो धनस्वामिन्या भागिनेयः स्वमातृष्वसृधनमवाप्नुयात् । एवमाद्यशब्देन परिगृहीता यथाक्रमेण स्वकीयमातृतुल्याया धनं समाप्नुयुः । एवमेव सपत्नीसन्तानोऽपि उपमातृधनं तत्सन्तानतत्भर्त्त्राद्यभावे समाप्नुयात् ।

कश्चित्तु भर्त्तृपितृभ्रात्रादिसद्भावेऽपि सपत्नीनां सन्तानविशेषस्य उपमातृधनभागित्वमाह । मनुः, स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथञ्चन ब्राह्मणी तद्धरेत् कन्या तदपत्यस्य वा भवेत् । पित्रा दत्तमिति वदन् पूर्व्वोक्तधनहर्त्तृभर्त्तृपितृप्रभृतिषु सत्स-

यीति दर्शयति। भर्तृविजातीयस्त्रीधनं तत्सन्तानाभावे सति भर्तृसजातीयस्त्र्यन्तरतत्कन्या तत्सन्ततिर्व्वा हरेदित्यर्थः।

एवञ्च भर्तृसजातीयानेकस्त्रीषु सन्तानशून्याया मृताया धनं स्त्र्यन्तरकन्या तत्सन्ततिर्व्वा न हरेत् किन्तु ब्राह्माादिषु भर्त्तैव। शेषेषु धनदातैवेत्यनुसन्धेयं।

उक्तार्थोपसंहारस्तु कात्यायनेन कृतः। स्त्रीधनस्य विभागोऽयं सधर्म्मः परिकल्पित इति। इत्येवं निरूपितो धर्म्मोऽयं कल्पितो विभागः स्त्रीधनस्य अध्यवसेय इत्यर्थः।

इति स्मृतिचन्द्रिकायां स्त्रीद्वारागतधनविभागः।

---

## अथ गौणपितृद्वारागतधनविभागः।

तत्र मनुः। न भ्रातरो न पितरः पुत्राऋक्थहराः पितुः। पिता हरेदपुत्रस्य ऋक्थं भ्रातर एव वा।

ननु एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुरिति तेनैवोक्तत्वात् पितृरिक्थके भ्रात्रादीनामप्रसक्तिरिति कथं तत्प्रतिषेधोऽवकल्पते। नच प्रनष्टपुत्रविषये ऽवकल्पतइति वाच्यं पुत्रा ऋक्थहरा इति विधानानवकल्पनात्।

उच्यते, पुत्रा ऋक्थहराः पितुरित्यत्र पुत्रपितृशब्दौ गौणौ। एवञ्चायमर्थः। क्षेत्रजादिपुत्राः क्षेत्रस्वाम्यादिपितृरिक्थहराः न तद्भ्रात्रादय इति।

क्षेत्रजादिपुत्रा अपि तेनैव दर्शिताः। यस्तल्पजः प्रमीतस्य क्लीवस्य व्याधितस्यवा, स्वधर्म्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः।१।

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि, सदृशं प्रीतिसंयुक्तं स पुत्रो दत्त्रिमः स्मृतः ।२। सदृशन्तु प्रकुर्य्याद्यं गुणदोषविचक्षणं, पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः ।३। उत्पद्यते गृहे यस्तु न विज्ञायेत कस्यवा, स गृहे गूढ उत्पन्न स्तस्य स्याद्यस्य तल्पजः ।४। मातापितृभ्यामुत्सृष्टं तयोरन्यतरेणवा, यं पुत्रं परिगृह्णीयादपविद्धस्तु स स्मृतः ।५। पितृवेश्मनि कन्यातु यं पुत्रं जनयेद्रहः । तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवं। ६ । या गर्भिणी संस्क्रियते ज्ञाताज्ञातापि वा सती, वोढुः स गर्भो भवति सहोढ इति चोच्यते ।७। क्रीणीयाद् यस्त्वपत्यार्थं मातापित्रो र्यमन्तिकात् । स क्रीतकः सुतं स्तस्य सदृशो ऽसदृशोऽपिवा ।८। या पत्या वा परित्यक्ता विधवा स्वेच्छयात्मनः । उत्पादयेत् पुनर्भूत्वा स पौनर्भव उच्यते ।९। मातापितृविहीनो य स्त्यक्तो वास्यादकारणात् आत्मानं स्पर्शयेद्यस्मै स्वयन्दत्तस्तु स स्मृतः ।१०। यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत् सुतम् स पारयन्नेव शव स्तस्मात् पारशवः स्मृतः ।११। क्षेत्रजादीन् सुतानेता-नेकादश यथोदितान् पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणइति ।

अद्भिरिति पुत्रदानविधानस्योपलक्षणार्थं । तत्प्रदानञ्चास्माभिर्दत्ताप्रदानिकपदे दर्शितं । आपदि दुर्भिक्षादौ । अथवा ग्रहीतुरापदि पुत्राभावे । सदृशं दातुः प्रतिग्रहीतुश्च सवर्णं । प्रीतिसंयुक्तं नतु लोभादिसंयुक्तं । प्रकुर्य्यात् पुत्रत्वेन स्वीकुर्य्यात् । सदृशोऽसदृशोऽपि वेत्यत्र गुणापेक्षयेति शेषः । गृहे भार्य्यायां । उत्सृष्टः दुष्टमुहूर्त्तादिहेतुतो न पातित्यतः । पारयन्नेव शवः जीवन्नेव शवः । पुत्रप्रतिनिधीन् गौणपुत्रान् । क्रियालोपादौरसाभावे तत्कर्त्तृकक्रियालोपात् बिभ्यतः । मनीषिण आहुरिति सम्बन्धः ।

एवं निरूपितगौणपुत्राणां सर्व्वेषां युगान्तरे पुत्रत्वेन परिग्रहः कलौतु दत्तकस्यैकस्य दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रह इति। कलेरादौ धर्म्मगुप्त्यर्थं महात्मभि र्दत्तकौरसेतरेषां पुत्रत्वेन परिग्रहनिवारणात्, पुत्रिकाकरणमप्यस्मादेव वाक्यात् कलौ निवारितं दत्तौरसेतरत्वात् पुत्रिकायाः। एवञ्च कलावौरसपुत्रपौत्रयोरभावे दत्तकएव गौणपुत्रो भवति नान्य इत्यनुसन्धेयं।

मुख्योऽपि पुत्रः कलौ सवर्णभार्य्याभावे नास्ति असवर्णकन्याकाविवाहनिषेधात्। तथाच धर्म्मज्ञवाक्यं कन्यानामसवर्णानां विवाहश्च द्विजन्मभिरिति। अत्रापि कलेरादौ धर्म्मगुप्त्यर्थं महात्मभिर्निवारित इति वाक्यशेषो द्रष्टव्यः। अतएवास्माभिरसवर्णपुत्राणां दत्तकेतरेषां गौणपुत्राणां पुत्रिकाया स्तत्सुतस्यच भागविधयो न निबध्यन्ते संप्रत्यननुष्ठीयमानत्वात् वृथात्र ग्रन्थविस्तारापत्तेः।

यत्पुन र्मनुनोक्तं। भ्रातॄणामेकजातानां यद्येकः पुत्रवान् भवेत्, सर्व्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीदिति तन्न परमार्थतो भ्रात्रन्तरस्यापि तेनैव पुत्रवत्त्वमाचष्टे भ्रातृपुत्रसद्भावे भ्रात्रन्तरस्य पुत्रवत्त्वानवगमात्। अतएव याज्ञवल्क्येन पत्नी दुहितर इत्यादिना भ्रातृपुत्रसद्भावेऽपि स्वर्य्यातस्य ह्यपुत्रस्येत्युक्तं भ्रातृपुत्रस्य च पत्नीदुहितृपितृभ्रात्रभावे सति अपुत्रधनभागित्वञ्च अतएव तत्रोक्तं।

एवं तर्हि मनुवचनस्य का गतिः उक्तं अस्माभिः श्राद्धाधिकारनिरूपणप्रकरणे भ्रात्रन्तराणां पुत्रवत्त्वोक्तिः ग्रामस्य तात इतिवदौरसप्रशंसार्थेति।

यत्तु संग्रहकारेणोक्तं। यद्येकजाता बहवो भ्रातरस्तु सहो-

दराः। एकस्यापि सुते जाते सर्व्वे ते पुत्रिणः स्मृताः। बह्वीनामेकपत्नीना मेष एव विधिः स्मृतः। एका चेत् पुत्रिणी तासां पिण्डदस्तु स दृश्यत इति। तस्य पूर्व्वोक्तेन सहाविरोधाय देवस्वामिना तात्पर्य्यार्थ उक्तः। उभयत्रापि नान्यः प्रतिनिधिः कार्य्य इति ग्रन्थेन, उभयत्रापि यद्येकजाता इत्यादि वचनद्वयेऽपि, भ्रातृसुते सपत्नीसुते च पुत्रप्रतिनिधितया कथञ्चित् कर्त्तुं शक्ये सति तदन्यः प्रतिनिधि र्न कार्य्य इति तात्पर्य्यार्थो बोद्धव्य इत्यर्थः।

एवञ्च गौणपितृद्वारा धनागमनं कलौ दत्ताख्यं पुत्रं प्रत्येव। अत्र मनुः उपपन्नो गुणैः सर्व्वैः पुत्रो यस्यतु दत्त्रिमः। आहरेतैव तद्रिक्थं संप्राप्तो ऽप्यन्यगोत्रतः। अपिशब्दात् असगोत्रतः संप्राप्तोऽप्यत्र तृतीयपदार्थो देवस्वामिना विवृतः। तदीयं सर्व्वरिक्थं गोत्रञ्चैव हरेत वेति। एवञ्च पितृत्वापादनक्रिययैव दत्त्रिमस्य पुत्रस्य ग्रहीतुर्द्धने स्वामित्वं तत्सगोत्रत्वञ्च भवतीति मन्तव्यं, दातुर्द्धनेतु दानात् पुत्रत्वनिवृत्तिद्वारा दत्त्रिमस्य स्वत्वनिवृत्तिः दातृगोत्रनिवृत्तिश्च भवतीति मन्तव्यं। अनेनाभिप्रायेणोक्तं। गोत्ररिक्थे जनयितु र्न हरेद्दत्त्रिमः सुत इति। प्रतिग्रहीतृरिक्थहरणेऽपि सर्व्वं क्वचिद्विषये न हरेत्, तथाच वशिष्ठः। तस्मिन् प्रतिगृहीते चेदौरसो जायते सुतः। रिक्थे चतुर्थभागी स्यादिति।

इति स्मृतिचन्द्रिकायां गौणपितृद्वारागतधनविभागः।

---

## अथापुत्त्रद्वारागतधनविभागः।

तत्र मनुः। पिता हरेदपुत्त्रस्य रिक्थं भ्रातर एव वेति। अक्षरार्थो व्यक्तः, तात्पर्य्यार्थस्त्वयक्तः संग्रहकारेण दर्शितः। अशेषात्मजहीनस्य मृतस्य धनिनो धनं। केनेदानीं ग्रहीतव्यं इत्येतन्मनुनोच्यते। अस्यार्थो मुख्यगौणपुत्त्रहीनस्य धनवतो मृतस्य धनमिदानीं तन्मरणानन्तरं केन हर्त्तव्यमित्याकाङ्क्षायां पित्रादिना हर्त्तव्यमित्येतदधुना पित्राद्यपेक्षया बहुविधोपकारकासन्नजनाभावे मनुनोच्यत इति। अतएव पित्रादिभ्यो गौणपुत्त्राणामासन्नतरत्वं ज्ञात्वा संग्रहकारेण पिता हरेदपुत्त्रस्येत्यस्याशेषात्मजहीनस्येति तात्पर्य्यमुक्तं तदवश्यमेव।

किन्तु यथा गौणपुत्त्राणां दृष्टादृष्टोपकारकत्वेन पित्राद्यपेक्षयाऽग्रेसरत्वात् तदपेक्षया चासन्नतरत्वं, तथा पत्न्या अपि दृष्टादृष्टोपकारकरणे श्रुतिस्मृत्यादिपर्य्यालोचनया पित्राद्यपेक्षयासन्नतरत्वमस्ति पत्न्या अभावे, पिता हरेदपुत्त्रस्येति एतन्मनुनोच्यते इत्ये तात्पर्य्यमूह्यं।

अतएव दृष्टादृष्टोपकारकत्वलक्षण सम्बन्धेनान्यापेक्षया पत्न्य अत्यासन्नत्वमभिधाय वृहस्पतिना गौणपुत्त्राभावे तिष्ठत्स्वा पित्रादिषु सकुल्यान्तेषु पत्न्या एव पतिधनभागित्वं दर्शितं आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः। शरीरार्द्धं स्मृत जाया पुण्यापुण्यफले समा। यस्य नोपरता भार्य्या देहार्द्धं त जीवति। जीवत्यर्द्धशरीरे च कथमन्यः समाप्नुयात्। कुल्ये विद्यमानेषु पितृभ्रातृसनाभिषु। असुतस्य प्रमीतस्य पत्नी तद्भाग हारिणीति। अत्र द्वितीयार्द्धेन दृष्टादृष्टोपकारसम्पादने पित्र

दि यः पत्न्याः प्रत्यासन्नत्वमभिहितं। अन्वयव्यतिरेकस्तु, आम्नाये वेदे, अर्द्धो वा एष आत्मनो यज्जायेत्येवमादौ, आत्मनो देहस्येत्यर्थः। एतदुक्तं भवति, देहार्द्धं अर्द्धाङ्गं यथा दृष्टादृष्टोपकारि तद्वज्जायापीति। स्मृतितन्त्रे धर्म्मशास्त्रे, पतेदर्द्धं शरीरस्य यस्य भार्य्या सुरां पिवेत्। पतितार्द्धशरीरस्य निष्कृतिर्न विधीयत इत्येवमादौ, लोकाचारे लोकाचारानुमतार्थशास्त्रे। शरीरार्द्धमयीं जायां कोहि हास्यति पण्डित इत्येवमादौ, पुण्यापुण्यफले समा, कर्म्मणि समाधिकारात्। अनुतस्य मुख्यगौणमृतहीनस्य पत्नी यज्ञाधिकारापादकप्रशस्त ब्राह्मादि विवाहसंस्कृता, पत्युर्नो यज्ञसंयोग इति पाणिनिस्मरणात्।

तेन क्रीता भार्य्या पत्नीपदेन व्यावर्त्तिता, तस्याः पत्नीत्वायोगात्। तथाच स्मृत्यन्तरं। क्रयक्रीता तु या नारी न सा पत्नी विधीयते। न सा दैवे न सा पित्रे दासीं तां कवयो विदुः। पत्नीत्वाभावे केवलं दृष्टोपकारकत्वमेव नादृष्टोपकारकत्वं स्त्रिया इति दर्शयितुं दासीं विदुरित्युक्तं।

एवञ्च पित्र्यादिकर्म्मण्यर्हतापि पतिभागहारित्वे प्रयोजिकेति पत्नीग्रहणेन ज्ञापितं। अतएव श्रौतस्मार्त्तादिकर्म्मणि पातिव्रत्येन परीक्षिताधिकारार्हतया एव पत्न्याः पतिधनलाभ इत्याह प्रजापतिः। पूर्व्वप्रमीताग्निहोत्रं मृते भर्त्तरि तद्धनं लभेत् पतिव्रता नारी, धर्म्म एष सनातनः। अग्निहोत्रशब्देन तत्साधनाग्नि लक्ष्य ते, पतिव्रता सुसंयता, व्रतनिमित्तेन श्रौतस्मार्त्तकर्म्माधिकारार्हता भर्त्रा सहवासेन स्थितेति यावत्। नारी, पत्नी। अग्निहोत्रलाभोक्तेः पत्नीत्वावगमार्थत्वात् कर्म्मार्हतायाः पित्र्ये कर्म्मणि भ्रात्राद्यपेक्षया अग्रेसरत्वं वृहस्पतिना दर्शितं। प्रजाभावेतु पत्नी स्यात् पत्न्यभावे तु सोदर इति।

अत्र वृद्धमनुः। अपुत्रा शयनं भर्त्तुः पालयन्ती व्रते स्थिता पत्न्येव दद्यात् तत्पिण्डं कृत्स्नमंशं लभेतच। उत्तरार्द्धं त्वर्थ-क्रमेण पाठक्रमबाधो द्रष्टव्यः। ततश्चायमर्थः। उक्तलक्षणा पत्न्येव भर्त्रंशं कृत्स्नं पूर्व्वं लभेत पश्चात् पिण्डं दद्यात्, न पुन-स्तस्यां सत्यां भ्रात्रादिरिति। भर्त्तुः शयनं पालयन्ती सुसंयते-त्यर्थः। व्रते स्थिता, पत्यौ जीवत्यपि भर्त्तुरनुज्ञया व्रतादिपरां, कामं भर्त्तुरनुज्ञया व्रतोपवासनियमेज्यादीनामारम्भः स्त्रीधर्म्ममिति शङ्खलिखितस्मरणात्, अनेनास्तिकतापि पत्यंशलाभे प्रयोजिकेति वचोभङ्ग्या ज्ञापितमिति मन्तव्यं।

यद्यपि विवाहादेव पतिधने कृत्स्ने च पत्न्या अपि स्वाम्यमा-जीवनात् परतन्त्रतया सिद्धं तथापि स्वतन्त्रतया स्वामित्वं लभते इत्येवमर्थं लभेत चेत्युक्तं।

तत् पिण्डकृत्स्नपदयोरर्थः प्रजापतिना प्रपञ्चितः। जङ्गमं स्थावरं हेम कुप्यं धान्यं रसाम्बरं। आदाय दापयेच्छ्राद्धं मासषाण्मासिकादिकमिति। पितृव्यगुरुदौहित्रान् भर्त्तुः स्वस्री-यमातुलान्। पूजयेत् कव्यपूर्त्ताभ्यां वृद्धानाथातिथीं स्तथेति। कुप्यं त्रपुसीसकादिकं, कव्यं पित्रर्थं संकल्पितं द्रव्यं, पूर्त्तं पूर्त्तखा-तादिकर्म्माङ्गभूतं दक्षिणादिकं। एतदुक्तं भवति स्थावरेणापि सहितं कृत्स्नमंशमादाय धनसाध्यस्त्र्यधिकारश्राद्धपूर्त्तादिकं दानादिकञ्च पत्युरात्मनश्च श्रेयःसाधनं कर्म्मजातं, पतिपक्षर्त्विग-गाचार्य्यादिपुरःसरं पत्न्या गृहीतधनानुसारेण कार्य्यमिति।

एवञ्च यत् कैश्चिदुक्तं। पत्नीगृहीतं पतिपक्षभोग्यं पतिपक्षानु-पकारकं वृथा यास्यतीति न पत्नी पतिधनभागिनीति, तदसिद्ध-हेतुकत्वात् हेयं।

एतच्च पत्नीस्वामित्वं विभक्ते पत्यौ द्रष्टव्यं। यथाह बृहस्पतिः। यद्विभक्ते धनं किञ्चिदाध्यादि विविधं स्मृतं। तज्जाया स्थावरं मुक्ता लभेत मृतभर्त्तृका। यतकिञ्चिदाध्यादि विविधधनं स्थावरजङ्गमात्मकं भर्त्तृस्वामिकं स्मृतं तत् सर्व्वं पत्न्या एव। विभक्तग्रहणात् अविभक्तविषयेतु सहवासिन एव पितृभ्रात्रादयो मृतापुत्रधनं लभेरन्निति गम्यते। जाया पत्नी।

स्थावरं मुक्तेत्येतद्दुहितृरहितपत्नीविषयं। पत्नीमात्र-विषये जङ्गमं स्थावरं हेम कुप्यं धान्यं रसाम्बरं आदायेति पूर्व्वो-क्तवचनविरोधः स्यात्। नच तद्विरोधात् अविभक्तपत्यंशविषयं, वृत्तहीनपत्नीविषयञ्चेदं वचनमस्त्विति वाच्यं। यतएव प्रकारा-न्तरव्यवस्थां निराकर्त्तुमाह सएव। वृत्तस्यापि कृतेऽप्यंशे न स्त्री स्थावरमर्हतीति। सन्तानवृत्तिभूतस्थावरलब्धार्हतातु सन्तान-शालित्वायत्तेति तच्छून्या स्त्री व्रतस्थापि विभक्तविषयेऽपि स्थावरं नार्हतीत्यर्थः।

यदपरमुक्तं तेनैव। मृते भर्त्तरि भर्त्रंशं लभेत कुलपालिका। यावज्जीवं नहि स्वाम्यं दानाधमनविक्रये इति। कुलपालिका वंशपालिका व्रतस्थेति यावत्। तद्दृद्धानाधान्वाद्युपजीवनाया दृष्टार्थदानविधानात् तदितरदृष्टार्थदानादावस्वातन्त्र्यप्रतिपाद-नार्थमिति मन्तव्यं।

एवञ्च धर्म्मार्थदाने स्वातन्त्र्यमस्त्येव। अतएव धर्म्मार्थदानमनिश मावर्त्तनीयमित्याह सएव। व्रतोपवासनिरता ब्रह्मचर्य्ये व्यवस्थिता। धर्म्मदानरता नित्यमपुत्रापि दिवं व्रजेदिति। नहि पारतन्त्र्ये नित्यनैमित्तिकक्रिया युज्यते। एवञ्चादृष्टसाधक द्रव्य सम्पादना-र्थकयो राधिविक्रययोरपि स्वातन्त्र्यमप्रतिषिद्धमिति मन्तव्यं।

यदपरमुक्तं कात्यायनेन, अपुत्रा शयनं भर्त्तुः पालयन्ती व्रते स्थिता। भुञ्जीतामरणात् क्षान्ता दायादा ऊर्द्ध्वमाप्नुयुरिति; क्षान्ता दायाधिकारीतरधनविनियोगप्रतिबन्धं सहमानेत्यर्थः। तदविभक्तदशायां रक्षणभरणासमर्थेषु कार्य्यान्तरव्यग्रेषु वा श्वशुरादिषु पत्न्या स्वयमेव जीवनार्थमुपात्ताविभक्तद्रव्यविषयं। विभक्तद्रव्यविषयत्वे वृद्धमन्वादिवचनविरोधापत्तेः।

रक्षणादिसमर्थेषु श्वशुरादिषु अविभक्तधनग्राहिषु सत्सु तैरेव गृहीतधनै र्भरणं कार्य्यं। तथाच नारदः। या पत्नी विधवाः साध्व्यो ज्येष्ठेन श्वशुरेण वा गोत्रजेनापि धान्येन, भर्त्तव्याच्छादनाशनैः। धनग्राहिणेति सर्व्वत्र ज्येष्ठादौ शेषो द्रष्टव्यः।

धनग्रहणनिमित्तत्वाद्भरणस्यात्र विशेषमाह कात्यायनः। स्वर्य्याते स्वामिनि स्त्रीतु ग्रासाच्छादनभागिनी। अविभक्तधनांशन्तु प्राप्नोत्यामरणान्तिकं। धनांशं यावता धनेन कृत्स्नजीवनं धनसाध्यन्तु, नित्यनैमित्तिककर्म्म काम्यं व्रतादिकं सिद्धति तावद्धनमित्यर्थः। तुशब्दो वाशब्दार्थे धनांशं प्राप्नोति, एतावद्धनसम्पादकक्षेत्रांशं वा प्राप्नोतीत्यर्थः, धनग्रहणस्य वर्त्तनाद्युपायोपलक्षणार्थत्वात्। अत्राद्यः पक्षः पत्नीव्यतिरिक्तभार्य्याविषयः।

जीवनमात्रसाधनधनधान्यस्य स्वल्पत्वे इयत्तामाह नारदः। आढकास्तु चतुर्व्विंश-चत्वारिंश-पणा स्तथा प्रतिसंवत्सरं साध्वी लभते मृतभर्त्तृका। आढको नामाष्टोनद्विशतप्रस्थपरिमितो धान्यसञ्चयः। पणः कार्षापणः। सच व्यावहारिकनिष्काशीतिभागस्य स्थाने क्वचिद्देशे प्रवर्त्तते। तेन यत्र देशे पणो न प्रवर्त्तते तत्र व्यावहारिकनिष्काशीतिभागं लभते। क्वतेऽप्यंशे इत्यनु-

स्मृतौ बृहस्पतिः । प्रदद्यात्येव तत् पिण्डं क्षेत्रांशं वा यदृच्छयेति पिण्डग्रहणं अशनाच्छादनोपलक्षणार्थं । एवञ्चायमर्थः अशनाच्छादनं पूर्व्वोक्तपरिमाणकं पूर्व्वोक्तधनांशसम्पादकक्षेत्रांशं वा स्वरुच्या भर्त्तृश्राद्धपत्नीव्यतिरिक्तविधवायै विभक्तविषये जीवनार्थं प्रदद्यादिति, एवकारः प्रदानस्यावश्यकत्वज्ञापनार्थः श्वश्र्वाद्यशुश्रूषकस्त्रीविषयो ऽयाद्यः पक्षः । तत्र ज्ञापकमुपरिष्टाद्भविष्यति । दत्तञ्च दायकेतरैरपि

कालनियमइत्याह । स्थावराज्जीवनं स्त्रीभ्यो यद्दत्तं श्वशुरेणतु न तच्छक्यमपाकर्त्तुं मितरैः श्वशुरेत्तरे, श्वशुरग्रहणं भरणकारिण उपलक्षणार्थं स्थावरग्रहणं धनस्योपलक्षणार्थं । तेन धनादपि जीवनार्थं स्त्रीभ्यो दत्तमपाकर्त्तुमशक्यमित्यवगन्तव्यं ।

क्वचिदपहर्त्तव्यमित्याह कात्यायनः । भोक्तुमर्हति कृप्तांशं गुरुशुश्रूषणे रता । न कुर्य्यात् पतिशुश्रूषां चेलपिण्डे नियोजयेत् । कृप्तांशमपहृत्येति शेषः । एवमकार्य्यकारिण्यादावपि कृप्तांशहरणं कार्य्यमित्याह सएव । अपकारक्रियायुक्ता निर्लज्जा चार्थनाशिका । व्यभिचाररता याच स्त्री धनं नच सार्हति । धनं जीवनार्थमुपकृप्तधनांशं क्षेत्रांशं वा जीवनाद्यर्थमुपकृप्तं । उक्तचतुर्व्विधा स्त्री नार्हतीत्यर्थः ।

धनग्रहणं अशनाच्छादनस्याप्युपलक्षणार्थं । अतएव नारदः । भरणञ्चास्य कुर्व्वीरन् स्त्रीणामाजीवनक्षयात् । रक्षन्ति शय्यां भर्त्तुश्चेदाच्छिन्द्युरितरासु तत् । इतरासु व्यभिचाररतासु । तद्भरणं अशनाच्छादनोपकल्पित धान्य वस्त्रमूल्य द्रव्य माच्छिन्द्युरपहरेयुरित्यर्थः ।

यत्तु मनुनोक्तं एवमेवम्विधं कुर्य्यात् योषित्सु पतितास्वपि ।

वस्त्रान्नमाशां देयन्तु वसेयुश्च गृहान्तिक इति। तद्भर्तृकर्तृका-भरणविषयमिति पूर्व्वोद्धृत एवाव गम्यते इत्यविरोधः ।

या पुनः शङ्कितव्यभिचारा तस्यास्तु विभक्तविषयेऽपि पत्नीत्वेऽपि हारीतोक्तं कार्य्यं । विधवा यौवनस्था चेत् नारी भवति कर्कशा । आयुषः क्षपणार्थन्तु दातव्यं जीवनं तदेति । कर्कशा क्रूरा, साहसाढ्या सम्भावितव्यभिचारेति यावत् ।

यत् पुनर्म्मनुना, पत्न्येव कृत्स्नमंशं लभेतचेति वृद्धमनूक्तविरुद्ध-मुक्तं। एषां ज्येष्ठः कनिष्ठोवा हीयेतांशप्रदानतः । म्रियेतान्यतरो वापि तस्य भागो न लुप्यते । सोदर्य्या विभजेरंस्ते समेत्य सहिताः समं भ्रातरो येच संसृष्टा भगिन्यश्च सनाभय इति। हीयेत पातित्यप्रव्रज्यादिनिमित्तेनेति शेषः ।

यदपि नारदेन। संसृष्टानान्तु योभाग स्तेषामेव स इष्यत इत्युक्ता उक्तं। भ्रातृणामप्रजाः प्रेयात् कश्चिच्चेत् प्रव्रजेत वा विभजेयु र्धनं तस्य शेषा स्ते स्त्रीधनं विनेति तदेतद्द्वयमपि संसृष्ट-द्रव्यविषयमिति स्पष्टमेव, तेन नास्ति विरोधः। एवञ्च पत्न्येव कृत्स्नमंशं लभेतेति विभक्तासंसृष्टविषयमिति मन्तव्यं ।

तथा संग्रहकारः। भ्रातृषु प्रविभक्तेषु संसृष्टेष्वप्यसत्सु च । गुर्व्वादेशान्नियोगस्था पत्नी धनमवाप्नुयादिति । गुर्व्वादेशान्नियोग-स्थेति धारेश्वरमतं विश्वरूपादिभिः सम्यक् दूषितत्वात् उपेक्ष-णीयं। ततश्च संग्रहकारोक्तविषये वृद्धमनूक्तगुणविशिष्टा पत्नी भर्तृधनमखिलमवाप्नुयादित्येतदेव मतमादर्त्तव्यं।

यत्तु श्रुतौ च व्यक्तं । तस्मात् स्त्रियो निरिन्द्रिया अदायादा इति, तदपि न, वृद्धमन्वादिवचनबाधकं। निरिन्द्रियपुत्र-साहचर्य्यादपत्यभूतस्त्रीविषयत्वावगतेः। भवतु वा सर्व्वस्त्री-

विषयत्वावगतिः। तथापि दायादतया शृङ्ग्राहिका पत्न्यादिस्त्री-व्यतिरिक्तविषयार्थवादश्रुतिरिति सर्वं सुस्थं।

पत्नीबहुत्वे समं विभज्य अपुत्रभर्त्तृधनग्रहणं सर्व्वासां युक्तं एवं सर्व्वस्मृत्यैकवाक्यतया निश्चितं। पत्नीधनं ये प्रतिबध्नन्ति ते राज्ञा नियन्तव्या इत्याह प्रजापतिः। तत्सपिण्डा बान्धवाश्च ये तस्याः परिपन्थिनः, हिंस्युर्द्धनानि तान् राजा चौरदण्डेन शासयेत्।

इति स्मृतिचन्द्रिकायां अपुत्रद्वारागतधनविषयाणि।

---

## दुहित्राद्यधिकारः।

अथ दुहित्रादिविषयाणि कानिचि द्वचनानि लिख्यन्ते।

तत्र बृहस्पतिः। भर्त्तुर्द्धनहरी पत्नी तां विना दुहिता स्मृतेति, तां विना तस्या अप्यभावइत्यर्थः। अतएव विष्णुः अपुत्रस्य धनं पत्न्यभिगामि तदभावे दुहितृगामीति। अस्मिन् क्रमे न्यायमाह बृहस्पतिः। अङ्गादङ्गात् सम्भवति पुत्रवद्दुहिता नृणां। तस्मात् पितृधनं त्वन्यः कथं गृह्णीत मानवः। शरीरावयवसम्बन्धेन दुहिता पुत्रसमा। पुत्रेहि पित्रवयवा बाहुल्येन संक्रामन्ति, दुहितरि त्वल्पाः। पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रिया इति स्मरणात् तेन किञ्चित्साम्यात् पुत्रवदित्युक्तं। अन्यः पुत्रपत्नीव्यतिरिक्तः, पित्रादिः मानवः तिष्ठन्त्यां दुहितरि कथमपुत्र-

धनं गृह्णीतेत्यर्थः । तथाच मनुः यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् । आत्मनि आत्मतुल्यपुत्रसन्तायामित्यर्थः ।

नन्वेवमपि गौणपुत्रपत्न्योरभावे दुहितेति क्रमे न्यायो नोक्तः औरसाभावमात्रे दुहितेतिन्तावन्मात्रसाधकत्वादुक्तन्यायस्य, सत्यं, किन्त्वेवमेव गौणपुत्रपत्न्योरभावे दुहितेत्यत्रापि क्रमे न्याय ऊहनीय इत्यभिप्रायेणोक्तं । अतएव नारदेन, तयोरप्यभावे दुहितेति क्रमानुसारिन्यायः स्वयमहितो मन्दानुग्रहाय प्रदर्शितः ।

पुत्राभावे तु दुहिता तुल्यसन्तानदर्शनादिति । स्वयमेव न्यायं विवृणोति । पुत्रश्च दुहिता चोभौ तुल्यसन्तानकारकाविति । उभौ स्वपितृश्रेयस्करसन्तानकारकावित्यर्थः । तथाहि पौत्रदौहित्रयोः पुत्रदुहितृसन्तानयोः स्वरूपत स्तुल्यत्वाभावात् कार्य्यतोऽत्र तुल्यत्वमभिप्रेतं, न ऋणापाकरणहव्यग्रहणलक्षणकार्य्यत स्तुल्यत्वं सम्भवति पुत्रपौत्रै ऋणं देयमिति स्मरणात् । तथा पितामहद्रव्यमधिकृत्य तत्र स्यात् सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोरिति स्मरणाच्च पौत्रस्याधिक्यप्रतीतेः । तेनात्रादृष्टकार्य्यत स्तुल्यत्वमभिप्रेतं तत्र श्राद्धदातृत्वं पूर्व्वेषान्तु स्वधाकारे पौत्रा दौहित्रका मता इति विष्णुस्मरणात् ।

एवञ्च दुहितृषु, सन्तानमुखेनादृष्टोपकारसम्बन्धिनासन्नता । नचैतावता निमित्तेन पुत्राभावे तिष्ठन्त्यां पत्न्यां दुहिता धनमर्हति, पत्न्याः साक्षादग्निहोत्रादिजन्यादृष्टोपकारसहकारित्वात् तेन पुत्राभावे दुहितेत्यत्र पुत्रग्रहणं पत्न्या अपि प्रदर्शनार्थमिति मन्तव्यं ।

ननु पिता श्राद्धदानेन स्वयमेवादृष्टोपकारक इति दुहितुरपेक्षयासन्नत्वात् पत्न्यभावे पिता हरेदपुत्रस्येत्यस्यावसर इति कथं

दुहितुरर्थग्रहणं। सैवं तस्यामात्मनि तिष्ठन्त्यां कथमन्यो हरे-द्धनमित्यनेनैवादाहृतत्वात्।

तथाहि यद्यदृष्टोपकारसम्बन्धेन व्यवहिता तथापि शरीर-सम्बन्धेनाव्यवहितैवाघेसरैव। तर्हि दुहित्रभावे पिता हरेदित्य-स्यावसरत्वात् नाधुनापि तस्यावसरः दुहित्रभावे दौहित्रस्य तत्-कोटित्वेन पित्राद्यपेक्षयासन्नत्वात् अपुत्रपौत्रसन्ताने दौहित्रा धनमाप्नुयुः पूर्व्वेषान्तु स्वधाकारे पौत्रा दौहित्रका मता इति विष्णुस्मरणाच्च।

एवं सोपपत्तिकीं पत्न्यभावे दुहितृगामितां ब्रुवता वृहस्पति-नैव यद्दुहितृगामिधनमिति विधायकं वचनजातं तत् पुत्रिका-विषयमेव न पुनरपुत्रिकादुहितृविषयमिति धारेश्वर देवस्वामि देवरातमतं स्मृतितत्त्वाभिज्ञत्वाभिमानोन्मादकल्पितं निरस्तं वेदितव्यं।

तथाहि तृतीयः पुत्रः पुत्रिका विज्ञायते इति वशिष्ठस्मृत्या गौणपुत्रकोटिनिविष्टायाः पुत्रिकायाः पत्न्यां सत्यामपि क्षेत्रजा-दिरिव, न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुरित्यादिवच-नान्तरैरेव औरसाभावे रिक्थग्राहिण्याः पत्न्या अभावे दण्डापूप-न्यायेन धनभागित्वे सिद्धे पुनः किं सोपपत्तिकं धनभागित्वं स्मर्त्तुं वृहस्पत्यादीनां वचनान्तरारम्भणेन, तेन तैरेव तन्मतं निरस्तमिति अलं धारेश्वरादिमतान्तरनिराकरणयत्नेनाश्राद्धीयेन।

यत्तु नारदेन पुत्रहीनपत्नीमधिकृत्योक्तं। स्यात्तु चेद्दुहिता तस्याः पित्र्यंशो भरणे मतः। आसंस्काराद्धरेद्भागं परतो बिभृयात् पतिरिति। तस्यार्थः। तस्याः पत्न्याः पुत्ररहिताया मृताया यदि दुहिता विद्यते तदा दुहितृ भरणाय पित्र्यंशो

ऽभिमतः तस्मादाविवाहसंस्कारात् भरणार्थमेव दुहिता पितृभागहरा न पुन र्यथेष्टविनियोगार्थमिति ।

एवञ्च सर्व्वासामेव कन्यानां पितृधनप्राप्तिरुत्सर्गइति गम्यते ततश्चास्यापवादकानि दुहितुः पितृधनप्राप्तिप्रतिपादकानि वचनानि सर्व्वाणि पुत्रिकाविषयाण्येवेति वाच्यं । दौहित्रमातृविषयत्वेतु उत्सर्गवत् सामान्यतया तदपवादात्वमत्वादनर्थकानि भवेयुः । तस्माद्धारेश्वरादीनामेव मतमनुसर्त्तव्यं स्यादेवं यदि नारदवचनं विभक्तविषयं स्यात् । संसृष्टविषयन्तु तदिति तस्यैव पूर्व्वापरपर्य्यालोचनया स्पष्टमवगम्यते । ततश्च विभक्तविषये यानि दुहितृदायप्रतिपादकानि वचनानि तेषां तत्र प्रापकत्वमेव नापवादकत्वमिति न पुत्रिकाविषयत्वकल्पने किञ्चिन्मूलमुपलभामहे इत्यलमतिवक्तना ।

एवमपि न दुहितृमात्रविषयाणि तानि वचनानि । यत आह कात्यायनः । पत्नी भर्त्तुर्द्धनहरी या स्यादव्यभिचारिणी तदभावेतु दुहिता यद्यनूढा प्रतिष्ठिता इति । एवञ्च तानि वचनानि अनूढ़दुहितृविषयाणि अथवा निर्द्धनोढादुहितृविषयाणीति मन्तव्यं निर्द्धनत्वेनैवाप्रतिष्ठितात्र व्यवस्थिता न पुन र्व्वन्ध्यत्वादिना सन्तानराहित्येनाप्रतिष्ठिता । तस्याः सन्तानमुखेनादृष्टोपकारकसम्बन्धाभावेन धनहारित्वायोगात् ।

तदभावइत्यनेन पर्व्वोक्ताया अव्यभिचारिण्याः पत्न्या अभावः प्रत्यवमृश्यते न पत्नीस्वरूपमात्रस्य तेन न केवलं पत्न्याः स्वरूपाभावे, दुहिता धनहारिणी किन्तु अव्यभिचारित्वरूपविशेषणाभावेऽपीति मन्तव्यं । अतएव संग्रहकारेण । तादृक् पत्न्या अभावेतु पुत्रिका धनमर्हतीत्युक्तं न परं पत्नीस्वरूपाभावे किन्तु धनभागि-

नीति निरूपणार्थमुक्तविशेषणविशिष्टपत्न्यभावे पुत्रिका धनमर्हतीत्यर्थः ।

पुत्रिका धनमर्हतीतितु प्रागेव निरस्तत्वादुपेक्षणीयं। तेन पत्नीस्वरूपाभावे दुहितृगामि द्रव्यं विशेषणाभावेतु पिता हरेदित्यादिवचनोक्तपित्रादिगामीति कैश्चित् कृता विषमव्यवस्था प्युपेक्षणीया। बृहस्पतिस्तु पत्न्या ऊर्द्धमर्थग्राहिणीनां मुख्यपुत्रादूर्द्धमर्थग्राहिणीनां च दुहितॄणां विशेषणान्याह। सदृशी सदृशेनोढा साध्वी शुश्रूषणे रता कृताकृता वा पुत्रस्य पितुर्द्धनहरी तु सा। सदृशी पितुः सवर्णा यानि चत्वारि विशेषणानि पत्न्या ऊर्द्ध धनहरी दुहितृविषयाणि प्रागधनग्राहिण्या दुहितुर्व्विशेषणत्वेनावशिष्ट कृताकृतेत्यत्र पुत्रिकेति विशेष्यस्याध्याहारः कार्य्यः। इतरत्र दुहितेति विशेष्यस्याध्याहारः कार्य्यः वाशब्दोऽत्र व्यवस्थितविकल्पाभिधानार्थः।

एवञ्चायमर्थः, औरसपुत्रविहीनस्य धनं द्विविधापि पुत्रिका पत्न्याः पूर्व्वं गृह्णीयात् सवर्णादिविशेषणोपेता दुहिता ऊर्द्धमिति, एवञ्च पत्न्या ऊर्द्धं सवर्णादिविशेषणोपेताप्रतिष्ठितानूढ़ानां दुहितॄणां समवाये अनूढ़ैव गृह्णाति पित्रा भर्त्तव्यत्वात्। तदभावे त्वप्रतिष्ठिता भर्त्रा भर्त्तव्यत्वेऽपि भर्त्तुर्भरणसमर्थत्वाभावेनाप्रतिष्ठितत्वात्, तदभावे सवर्णादिविशेषणोपेता, प्रतिष्ठितत्वेऽपि धनग्रहणयोग्यत्वात् तदभावे दौहित्र स्तत्कोटित्वात् इत्यनुसन्धेयं।

दौहित्रस्याभावेतु पित्रपेक्षयान्यस्यासन्नत्वाभावात् पिता हरेदपुत्रस्य ऋक्थमित्युक्तस्यावसरत्वात् पितृगामि धनं भवतीति अस्मिन्नेवावसरे मात्रपेक्षयान्यस्यासन्नतरत्वाभावात् अनपत्यस्य पुत्रस्य माता दायमवाप्नुयादिति उक्तस्यानवसरत्वात् मातृगामि धनं भवति।

अतएव याज्ञवल्क्येन पत्नी दुहितरश्चैव पितरौ भ्रातर इत्युक्तं, च शब्देन सूचितस्य दौहित्रस्यानन्तरमेव मातापितरौ समसमये धनभाजौ तयोरवान्तरक्रमन्यायाभावात् इत्यवगन्तव्यो ऽभिप्रायः

याज्ञवल्क्योक्ताभिप्रायमबुद्ध्वा कैश्चित् पण्डितम्मन्यैः कश्चिन्न्याय उत्प्रेक्षितो मातुर्गर्भपोषणधारणद्वारात्यन्तोपकारित्वादेव सहस्रन्तु पितु र्माता गौरवेणातिरिच्यत इति स्मरणाच्च पितरि विद्यमानेऽपि मातुरंशग्रहणाधिकार इति। नायं न्यायो मातुरादावंशग्रहणाधिकारापादनायालं पितुरपि बहुधा सन्निधातृत्वात् विद्याप्रदत्वात् तयोरपि पिता श्रेयान् वीजप्राधान्यदर्शनादिति स्मरणाच्च। अन्यैः पुनरन्यथोत्प्रेक्षितं, पिता सपत्नीपुत्रेष्वपि साधारणः माता तु न साधारणीति प्रत्यासत्त्यतिशयोस्तीति विप्रलम्भनसद्वचमिदं नहि जननीजनकयोर्जन्यं प्रति सन्निकर्षतारतम्यमस्ति। नच बहुसम्बन्धेन साक्षातसम्बन्धनिवन्धनायाः प्रत्यासत्त्यतिशयो व्यपैति।

यदपि तैरेवोक्तं एकशेषग्रहणेऽपि कथञ्चिन्मातुः प्राथम्य मवगम्यतइति, तदपि मन्दं, सारस्वतौ भवत इत्युत्पत्तिरीत्या क्रमावगत्यभावेन याज्यात् क्रमात् प्रधानयोः क्रमः पञ्चमे दर्शितो न पुनः सारस्वताविन्त्येकशेषत एवं कथञ्चित् क्रमावगति-रुपपादितेति तन्निवन्धॄणामेव मातुः प्राथम्य समर्थनं। अतएव श्रीकरेण पित्रो र्विभज्य धनग्रहणमुक्तं तदप्ययुक्तं। पिता हरेदपुत्रस्य ऋक्थं स्वर्यातस्य ह्यपुत्रस्य माता दायमवाप्नुयात् इत्येताभ्यां व्रीहियवयोर्न्निरपेक्षसाधनत्ववन्निरपेक्षस्वामित्वप्रतीतेः। अपरे पुनरन्यथा मातुः प्रत्यासत्तिमुन्नयन्ति सोदरस्यतु सोदर इत्यत्र मातृद्वारेण सोदरवचनात मातुः प्रत्यासत्ति र्गम्यते इति।

तत्रापि कुशावलम्बनमात्रे तथाहि भ्रातुर्भिन्नोदरात् एकोदरयो-रभिन्नमातृकत्वेन प्रत्यासत्तौ विशेषोऽस्तु जनकात् पुन र्जनन्याः पुत्रं प्रति प्रत्यासत्तौ विशेषः किं निबन्धनो भविष्यतीति न विद्मः ।

तस्मादत्र पित्रोः सद्भावे कः क्रम इत्यपेक्षायां वक्तव्यो विशेषः । यत्तूक्तं शम्भुना अव्यक्तधनत्वाद्दम्पत्यो र्येन केनचित् गृह्यमाणमुभयार्थमिति न विशेषो वक्तव्यइत्येव सोऽभिधीयते । न्यायाभावादत्र क्रमे वचनमेव शरणं वचने च प्रथमं पितुरेव धनग्रहणाधिकारः प्रतिपाद्यते । तथाच अपुत्रस्य धनं पत्न्यभिगामि तदभावे दुहितृगामीत्यनुवृत्तौ वृहद्विष्णुः तदभावे पितृगामि तदभावे मातृगामीति ।

यद्यप्यपुत्रधनस्य दुहित्रभावे पितृगामित्वमुक्तं तथापि दुहित्रभावे दौहित्रगामित्वस्य न्यायवचनाभ्यामुक्तत्वात् दौहित्राभावे पितृगामित्वमवगन्तव्यं दौहित्रस्यापि दुहितृकोटित्वात् प्रथमदौहित्रगामित्वानभिधानं वृहद्विष्णोरिति च मन्तव्यं । मात्रभावे सोदरभ्रातृगामित्वं एकमातृकत्वेन मृतभ्रातुः प्रत्यासत्त्यतिशयलक्षणन्यायात् प्राप्तं । तदभावे भिन्नोदरगामित्वं याज्ञवल्क्येन न्यायमूलकक्रममेवाभिदधताभिहितं । पितरौ भ्रातर स्तथेति भ्रातरः सोदरएवात्र भिन्नोदरापेक्षया धनं प्रति प्रत्यासन्नत्वादभिप्रेतः । तनश्च मात्रभावे सोदरभ्रातृगाम्यपुत्रधनमित्युत्सर्गो याज्ञवल्क्येन दर्शितः, तदा सोदरत्वस्वरूपविशेषविवक्षायामपि भ्रातर इति सामान्यशब्दप्रयोगेण सोदराभावे भिन्नोदरा इत्युत्सर्ग स्तेनैव दर्शितः ।

वक्ष्यमाणविषयद्वये ऽपवादमाह कात्यायनः । विभक्ते

संस्थिते द्रव्यं पुत्राभावे पिता हरेत्। भ्राता वा जननी वाथ माता वा तत्पितुः क्रमात्। तत्पितुर्माता विभक्तमृतापुत्रस्य पितु र्माता पितामहीति यावत्। पुत्रग्रहणमासन्नतरोपलक्षणार्थं तेन पुत्रादिदौहित्रान्तानां पित्रपेक्षया दृष्टादृष्टोपकारादि सम्बन्धेनासन्नतराणामभावे प्रथमं पिता हरेदित्यर्थः। वाशब्दोऽत्र योग्याभावविकल्पार्थः साम्याख्ये सिद्धरूपे वस्तुनि नहि वस्तुनि विकल्प इति न्यायेन तुल्यवत् विकल्पासम्भवात्।

एवञ्चैतदुक्तं भवति पित्रभावे भ्राता तदभावे जननी तदभावे पितामही इति क्रमादुक्तं पाठक्रमेणेत्यर्थः। अनेनैव क्रमेण विभक्त संस्थितविषये मनुरपि पितृपत्नी-दुहितृ-दौहित्राणामासन्नतराणामभावा अपुत्रस्येत्युपलक्षण शब्देनोक्ताः।

पितृ भ्रातृ मातृ पितामहीनां धनग्रहणं सार्द्धश्लोकेनाह। पिता हरेदपुत्रस्य रिक्थं भ्रातरएव वा अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्। मातर्य्यपि च वृत्तायां पितु र्माता धनं हरेदिति। अपुत्रस्य पुत्र पत्नी दुहितृ दौहित्ररहितस्येत्यर्थः। एवञ्च कात्यायन-मनु-प्रतिपादितः पित्रादि पितामह्यन्तानां धनग्रहणक्रमवचनैकनिबन्धनत्व विरुद्ध नैयायिक क्रमबाधक इति न्यायविरोधशङ्कातु न कार्य्या। याज्ञवल्क्यीयमेव वचनं क्रमपरं तत्परत्वस्य पूर्व्वाभावे परःपर इति कण्ठोक्त्या व्यक्तत्वात्, तेन च तद्विरुद्धानीति पिता हरेदपुत्रस्येत्येव मादीनीत्यधिकारमात्रपराणि न क्रमपराणीति व्याख्याप्युपेक्षणीया। माता वा तत्पितुः क्रमादिति मातर्य्यपिच वृत्ताया मिति च कात्यायन मनुवचनयोरपि कण्ठोक्त्याक्रमस्मृतेः।

मातुः पूर्व्वं भ्राता धनहारीत्यत्र विशेषमाह वृहस्पतिः।

भार्य्यासुतविहीनस्य तनयस्य मृतस्य तु माता स्वक्थहरी ज्ञेया भ्राता वा तदनुज्ञयेति, भार्य्याग्रहणं न्यायवचनतो बद्धक्रमाणां दुहितृदौहित्रपितॄणामुपलक्षणार्थं। तेन सुतभार्य्यादुहितृदौहित्रपितृविहीनस्येत्यर्थो विज्ञेयः। एवञ्च पितरौ भ्रातरस्तथेत्युक्तक्रमस्य मातुरनुज्ञाविषये विद्यमाने न पितामहीविषयेच, कात्यायनाद्युक्तक्रमेणापवादोऽनुसन्धेयः।

एतेनेदं निरस्तं यत् कैश्चिदुक्तं मातृपितृभ्रातृभ्रातृसुतानां पितरौ भ्रातरस्तथा तत्सुता इति वचनेन बद्धक्रमत्वात् मध्येऽप्यनुप्रवेशाभावात्, भ्रातृसुतानन्तरं हि पितामही गृह्णाति तस्याः क्रमविशेषोक्त्यभावेनाविरोधादिति। नहि पितामह्याः क्रमविशेषोक्त्यभावः, कात्यायनवचनपाठ तद्गतायशब्देन मानवीये मातर्य्यपिच वृत्तायामिति पदद्वयेन च पितामह्याः क्रमविशेषोक्तेः प्राक् प्रदर्शितत्वात् बद्धक्रमत्वात् न्यायमूलस्य मध्ये वचनमूलक्रमविशेषसम्भवाच्च।

यत्तु शङ्खेनोक्तं स्वर्य्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातामिति। तत् सामान्यविशेषन्यायेन विभक्तसंस्थितविषयादन्यत्र संसृष्टस्वर्य्यातविषये ऽवतिष्ठते इत्यविरोधः।

यत्तु बृहस्पतिनोक्तं पुत्राभावेतु पत्नी स्यात् पत्न्यभावेतु सोदरः। तदभावे तु दायादाः पश्चाद्दौहित्रकं धनमिति तत्पत्न्याः पूर्व्वं सोदरनिवृत्त्यर्थं न पुन दायादशब्दनिर्द्दिष्टदुहितृभ्यः पूर्व्वं सोदरप्राप्त्यर्थं, तथात्वे अङ्गादङ्गात् सम्भवति पुत्रवद्दुहितेत्यादि स्ववचनविरोधापत्तेः।

यत्तु देवलेनोक्तं ततो दायमपुत्रस्य विभजेरन् सहोदराः

तुल्या दुहितरो वापि ध्रियमाणः पितापि वा सवर्णा भ्रातरो माता भार्य्या चेति यथाक्रममिति। यद्यप्यत्राव्यवहितान्वयो वचनसामञ्जस्येनावगम्यते तथापि पूर्व्वोक्तसर्व्ववचनन्यायविरोधाय व्यवहितान्वयेनैवार्थो ऽवगन्तव्यः।

तथाहि अपुत्रस्य दायं भार्य्या पत्नी अवाप्नुयात्, अथवा तुल्याः सवर्णा दुहितरो विभजेरन्, अपिवा ध्रियमाणो विद्यमानः पिता हरेत्, अनर्थकः ध्रियमाणशब्दो अध्रियमाणे पितरि माते-त्यन्वयावगमाय पितुरभावे माता अवाप्नुयात्, पितुः सवर्णाः सहो-दराश्च भ्रातरो यथाक्रमं पूर्व्वं सहोदरा स्तदभावे सवर्णासहोदरा-इति क्रमानतिक्रमेण विभजेरन्निति। मातुरनुज्ञा पितामह्यभावे विषयेच द्रष्टव्यं।

अस्मिन्नपि विषये कात्यायनेन सुबोधक्रमो दर्शितः। अपु-त्रस्याथ कुलजा पत्नी दुहितरोऽपि वा तदभावे पिता माता भ्राता पुत्राश्च कीर्त्तिताः। पुत्रशब्दः सम्बन्धिशब्दत्वादिन्यायेन भ्रातृ-पुत्रेष्वेव वर्त्तते अतएव याज्ञवल्क्येन भ्रातर स्तत्सुता इत्युक्तं।

यत्तु संग्रहकारेणोक्तं तावद्दुहित्रभावेतु माता धनमाप्नुयात् विद्य-मानेऽपि पितरि सपत्नीसुतसन्ततौ तादृङ्मातुरभावेतु पितु र्माता हरेद्धनं विद्यमानेऽपि पितरि क्षत्रियासुतसन्ततौ पितामह्या अभा-वेऽपि पिता धनमवाप्नुयात् इति सुतसन्ततावित्यत्र विद्यमाना-यामित्यध्याहारे कृते सति अस्यार्थः सुगमः तदेतद्धारेश्वरोत्प्रेक्षित न्यायमूलत्वात् विश्वरूपादिभिस्तन्न्यायनिराकरणात् मूलभूतन्याये-ऽसति अनादर्त्तव्यमेव। यत्पुनस्तेनैवोक्तं सोदर्य्याः सन्त्यसोदर्य्य-भ्रातरो द्विविधा यदि विद्यमानेऽप्यसोदर्य्ये सोदर्य्या एव भागिन इति तत् सम्यक्न्यायमूलत्वादादरणीयमिति भ्रातृसुतेष्वयं विशेषः

सोदरासोदरभ्रातृसुतसमवाये ग्राह्यः ततश्च सोदरसुताभावे सापत्न्य-भ्रातृसुताधनभाजः तेषामप्यभावे के धनभाजइत्यपेक्षिते याज्ञवल्क्यः। गोत्रजा इति धनभाजइतिशेषः गोत्रजशब्दोऽत्र गोबलीवर्द्दन्यायात् पूर्व्वोक्तपितृभ्रातृतत्सुतव्यतिरिक्त पितामहसुतादिगोत्रजेषु वर्त्तते तत्रापि स्वरूपैकशेषस्य स्वतोऽवगतेः पितामहदुहित्रादि स्त्रीव्यति-रिक्तेषु वर्त्तते कारणान्तरादेवहि कुक्कुटौ वायसौ मिथुनीकरिष्याम इत्येवमादौ विरूपैकशेषावगतिः नचेहतथास्तिकारणान्तरं प्रत्युत भ्रातृतत्सुतसाहचर्य्यात् पुमांसएव गोत्रजागम्यन्ते किञ्च पत्नी-दुहित्रादीनां शृङ्गग्रहणेन दायादत्वस्मृतेरगत्या तस्मात् स्त्रियो निरिन्द्रिया अदायादिरितिश्रुतेः तेनैव स्वरूपैकशेषतया स्मृतेः सत्यां गतौ श्रुतिविरोधिनी विरूपैकशेषता दूरोत्सारिता। अतएव जीवन् पुत्रेभ्यो दायं विभजेदित्यापस्तम्बसूत्रं व्याचक्षाणेन तद्भाष्यकारेण पुत्रेभ्य एव दायं विभजन् न स्त्रीभ्यो दुहितृभ्य इत्युक्तं।

यद्यपि भ्रातृपुत्रौ स्वसृदुहितृभ्यामिति शाब्दस्मृत्या पुत्रेभ्य इत्यत्र विरूपैकशेषं कृत्वा दुहितॄणामनुप्रवेशोऽत्र कर्त्तुं शक्यते तथापि पुमांसो दायादा न स्त्रिय स्तस्मात् स्त्रियो निरिन्द्रिया अदायादिरिति श्रुतेरिति। एतेनेदं निरस्तं।

यत् कैश्चिदुक्तं। गोत्रजाः पितामहीसपिण्डाः समानोदकाश्च तत्र पितामही प्रथमं धनभाक्, मातर्य्यपिच वृत्तायां पितुर्म्माता धनं हरेदिति मातुरनन्तरं पितामह्या धनग्रहणे प्राप्ते पित्रादीनां भ्रातृसुतपर्य्यन्तानां वद्धक्रमत्वेन मध्येऽनुप्रवेशाभावात् उत्कर्षे तत्सुतानन्तरं पितामही गृह्णाति अविरोधात् इति। भ्रातृ-सन्तानानन्तरमपि तेषां गोत्रजानाञ्च वद्धक्रमत्वाविशेषात् पिता-

मह्यै वा सहात्र क्रमो निबध्यते इति सम्बद्धं। स्वरूपैकशेषत्वेन पुंसामेव गोत्रजानां भ्रातृसुतसहक्रमबन्धनात्। न ह्यन्यगोत्रजा पितामही मृतगोत्रजापीत्यलं बहुना।

गोत्रजा इत्येकशेषकरणमपि पितराविति वत् न्यायमूलत्वान्नान्तरक्रमाभावादेव याज्ञवल्क्यस्येति मन्तव्यं। नहि भ्रातृसुताभावे पितामहसुतो धनभागित्येवमाद्यवान्तरक्रमे कश्चिन्न्यायोऽस्ति नहि पितामहानतिक्रम्य तत्सुतो धनभागिति केनोच्यते भ्रातर स्तत्सुता इत्यभिधाय गोत्रजा इत्यभिदधता याज्ञवल्क्येनैवोच्यते गोत्रजशब्देनैव भ्रातृतत्सुतयो र्निर्द्देशे गम्यमानेऽपि पृथक् तयोरभिधानस्य गोत्रजेषु पितामहादिषु तस्य तस्य सन्ततौ पितृसन्तानावपि च पुत्रपौत्रयो र्द्धनभागित्वज्ञापनार्थत्वात्। मनुनाप्ययमेवार्थः सूच्यते। यो यो ह्यनन्तरः पिण्डात् तस्य तस्य धनं भवेत्। अत ऊर्द्ध्वं सकुल्याः स्यु राचार्य्यः शिष्यएव वा। तथेति धारेश्वरोव्याचष्टे यो यो ह्यनन्तरः पिण्डादित्यत्र पिण्डात् सपिण्डादित्यर्थो द्रष्टव्यः।

कः पुनरवधिभूतः सपिण्डः पिता हरेदित्यभिहितः पितैव पितुरनन्तर स्तत्पिता भवति तत्पुत्रस्य तत्रोभयो र्विद्यमानत्वे कस्यानन्तर्य्यं युक्तं तत्पुत्राणामिति ब्रूमः। कुत एतत् पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वेत्यत्र एवकारेण पितामहे रिक्थभागित्वभागसूचनात्। ततश्च वचनादेव तुल्येऽप्यानन्तर्य्ये सन्ततिद्वारमेवानन्तर्य्यमिष्यते। एवञ्च योयो ह्यनन्तरः पिण्डादित्यनेन पितृसन्ततेरभावे पितामहसन्ततिरभिधीयते तस्यतस्याभावे प्रपितामहसन्ततिरित्येवमाद्याः सपिण्डा अनुसन्धेयाः।

सपिण्डानामभावेतु सकुल्याः समानोदकाश्च तत्र सकुल्यशब्दे-

तेषामप्यासन्नसन्ततेरभावे पूर्ववत् विप्रकृष्टसन्तते-
एवञ्च ये भ्रातृसुतानन्तरं पितामहो धनभाक्
न्ततिः एवं प्रपितामहादेरपीत्याहुः। ते न्याय-
हानन्तरवचनज्ञा न भवन्तीति।
दायप्राप्तिक्रमः। भ्रातृसुताभावे पितामहसुतस्य दाय-
भावे तत्सुतस्य, तस्याभावे प्रपितामहसुतस्य, तस्याभावे
स्याभावे वृद्धप्रपितामहसुतस्य, तस्यतस्याभावे तत्सुतस्य,
सपिण्डातीतपुरुषसुतस्य, तस्याभावे समानोदकाद्य-
तस्याभावे तत्सुतस्य, एवमेवोपरितन षट्समा-
वप्यनुसन्धेयं।
सर्व्वमभिसन्धायाह वृहस्पतिः। बहवो ज्ञातयो यत्र
न्धवा स्तथा यश्चासन्नतरस्तेषां सोऽनपत्यधनं हरेत्।
ण्डाः, सकुल्याः समानोदकाः। बान्धवा स्त्वासन्न-
स्मृत्यन्तरे दर्शिताः। आत्मपितृष्वसुः पुत्रा आत्म-
ताः। आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः।
सुः पुत्राः पितु र्मातुःष्वसुः सुताः पितुर्मातुलपुत्राश्च
बान्धवाः। मातुः पितृष्वसुः पुत्राः मातु र्मातृष्वसुः
तुलपुत्राश्च विज्ञेया मातृबान्धवा इति।
कुल्यबन्धुषु आसन्नतराभावे यथाकथञ्चिदप्यासन्नतरा
पिण्डगोत्रर्षिसम्बन्धा रिक्थं भजेरन्निति सामान्येन
त्। बन्धूनामभावे के ऋक्थभाज इत्यपेक्षिते याज्ञ-
यः सब्रह्मचारिण इति। धनभाज इति शेषः।
मध्यापितः शिष्यः। एकाचार्य्यकः सब्रह्मचारी।
सम्बन्धेन धनसम्बन्धे गुणभूतस्य शिष्यस्य कथनेन

प्रधानभूताचार्य्यस्य दण्डापूपन्यायात् बन्धुभावे प्रथमं धनसम्बन्ध इति मत्वाचार्य्यस्यात्रानभिधानमिति मन्तव्यं।

सब्रह्मचार्य्यभावे के धनभाज इत्यपेक्षिते मनुः। सर्व्वेषामप्यभावेऽपि ब्राह्मणा रिक्थभागिनः त्रैविद्याः शुचयो दान्ता स्तदा धर्म्मो न हीयते। अहार्य्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिरिति। उक्तलक्षणब्राह्मणाभावे राजानं प्रत्याह, नारदः ब्राह्मणार्थस्य तन्नाशे दायादश्चेन्न कश्चन ब्राह्मणायैव दातव्य मेनस्वी स्यान्नृपो ऽन्यथा। तन्नाशे अर्थस्वामिनाशे। ब्राह्मणेतरार्थस्य तन्नाशे त्वाह मनुः। इतरेषान्तु वर्णानां सर्व्वाभावे हरेन्नृप इति। जनपदादिपरिपालनादिकर्त्ता नृपः। सर्व्वेषामप्यभावे राजगामि धनमित्यनुवृत्तौ नारदः। अन्यत्र ब्राह्मणात् किन्तु राजा धर्म्मपरायणः तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः। तत्स्त्रीणां ब्राह्मणेतरधनस्वामिस्त्रीणां धनभागित्वानर्हाणामित्यर्थः।

सर्व्वेषामप्यभाव इत्यत्र वर्णविशेषनिबन्धनं विशेषमाह संग्रहकारः। पितर्य्यविद्यमानेऽपि धनं तत्पितृसन्ततेः। तस्यामविद्यमानायां तत्पितामहसन्ततेः। असत्यामपि तस्यान्तु प्रपितामहसन्ततेः। एवमेवोपरीतनाः सपिण्डा धनभागिनः। तदभावे सकुल्याः स्यु राचार्य्यः शिष्यएव वा। सब्रह्मचारी सद्विप्रः पूर्व्वाभावे परः परः। शूद्रस्यैकोदकाभावे राजा धनमवाप्नुयात्। आचार्य्यस्याप्यभावेतु तथा क्षत्रियवैश्ययोरिति संग्रहकारस्य धारेश्वरमतानुसारित्वात्। पितर्य्यविद्यमानेऽपि धनं तत् पितृसन्ततेरित्यभिधानं, अस्मिन् मतेतु पितर्य्यविद्यमानेतु मातुर्द्धनं तदभावे पितामह्या स्तदभावे तु धनिकपितृसन्तते भ्रातृतत्सुतात्मिकाया इत्यनुसन्धेयं।

एवमुक्तमपुत्रधनविषयं सर्व्वं यथायोग्यं अनुपनीतोपकुर्व्वाणक ब्रह्मचारिसमावृत्त गृहस्थाश्रमान्तरवहिर्भूत स्नातकस्वामिविषयं। नैष्ठिकमनःस्थैर्य्यवानप्रस्थयतिधनविषयेतु ग्राहकान्तरश्रवणात्। तथाच याज्ञवल्क्यः। वानप्रस्थयतिब्रह्मचारिणामृक्थभागिनः। क्रमेणाचार्य्यसच्छिष्य धर्म्मभ्रात्रेकतीर्थिनः। ब्रह्मचार्य्यत्र यति-साहचर्य्यात् नैष्ठिको ऽवगम्यते। धर्म्मभ्राता समानाचार्य्यकः। एकतीर्थी समानशास्त्रक्रमेण पूर्व्वाभावे परः पर इत्यर्थः।

इति स्मृतिचन्द्रिकायां दुहित्रादिविषयाणि।

---

## संसृष्टधनविभागः।

अथ संसृष्टभ्रात्रादिविषयाणि कानिचिद्वचनानि लिख्यन्ते।

तत्र वृहस्पतिः। विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः, पितृव्येणाथवा प्रीत्या सवै संसृष्ट उच्यते। यः पुत्रादिः पित्रादिना सह विभक्तः सन्, पुनः प्रीत्यादिनिमित्तेन विभक्तेनैव येन पित्रादिना सह वासमापन्नः स तेन संसृष्ट उच्यत इत्यर्थः।

इदञ्चात्रार्थादवगम्यते। पितृभ्रातृपितृव्यव्यतिरिक्तपितृव्य-पुत्रादिना सह संसर्गो न विद्यते इति सहवासे पुरुषाणामाहत्य संसर्गाभावात् धनद्वारेण संसर्गो वाच्य इति तन्निमित्तभूताव-च्छेदकापनोदेन विभक्तानां धनादीनां पूर्व्ववदेकराशीकरण-पर्य्यन्तः संसर्गो न पुनः सहवासमात्रमिति मन्तव्यं। अतएव पुनः क्रियमाणधनविभागमनूद्य तत्र प्रकारविशेषमाह मनुः। विभक्ताः सहजीवन्तो विभजेरन् पुनर्यदि समस्तत्र विभागः स्यात् ज्यैष्ठं तत्र

न विद्यते। सह जीवन्तः सहवासेन जीवन्तः, विभजेरन् संसृष्ट-धनविभागे समभागविधानादेव सिद्धे ज्यैष्ठनिमित्तकभागग्रहणे पुनर्ज्यैष्ठनिमित्तकवैषम्यनिषेधः वक्ष्यमाणधनसंसर्गनिमित्तकभागवैषम्यानुज्ञानार्थः। तेन संसर्गसमये यदीयं यावत् संसृष्टं तदनुसारेण संसृष्टविभागवैषम्यं कल्पनीयं। एवञ्च धनस्येदन्तापनोदाय संसर्गो न पुनरियत्तापनोदायेति मन्तव्यं।

अन्यदपि भागवैषम्यं निमित्तान्तरकृतमाह बृहस्पतिः, संसृष्टानान्तु यः कश्चिद्विद्याशौर्य्यादिनाधिकं। प्राप्नोति तस्य दातव्यो ह्यंशः शेषाः समांशिनः। अस्मिन् प्राप्ताधिकधने इति शेषः। संसृष्टद्रव्यानुपरोधेनार्जितेऽपि विभाज्यत्वविधानार्थमेतत्। संसृष्टानां मध्ये पुनर्व्विभागकरणादर्व्वाक् प्रमीतस्य पुत्रादिसद्भावे प्रमीतपितृकाणान्तु पितृतो भागकल्पनेति विधिना विभागः कर्त्तव्यो विधानान्तरस्मरणात् पुत्राद्यभावेतु न पत्नीदुहितृन्यायः। विधानान्तरस्मरणात्। तथाच बृहस्पतिः। विभक्ता भ्रातरो येच संप्रीत्यैकत्र संस्थिताः पुनर्व्विभागकरणे तेषां ज्यैष्ठं न विद्यते। यथा कश्चित् प्रमीयेत प्रव्रजेद्वा कथञ्चन न लुप्यते तस्य भागः सोदरस्य विधीयतइति। यथा प्रथमविभागात् पूर्व्वं प्रमीतस्यापुत्रस्य प्रव्रजितस्य वा भागो लुप्यते विभागाभावेन विभागहेतुकाया इयत्ताया अभावात् तेन सर्व्वं रिक्थं सहवासिनएव तत्र सर्व्वे गृह्णन्ति न तथात्र विभागहेतुकाया इयत्ताया अभावः प्रथमविभागेनैवेयत्तायाः कृतत्वात् नच संसर्गादपैति तस्येदन्तामात्रापनोदकत्वात् तेन सर्व्वं रिक्थं संसृष्टिन एव सर्व्वे गृह्णीयुः किन्तु विभागकाले तद्भागः पृथगुद्धरणीयः सच विभक्तपतिभागविषयविवादो न पत्न्याः किन्तु संसृष्टसोदरभ्रातुर्व्वचनेन विधीयते।

सोदरस्येत्येकवचनमविवक्षितं। अतएव नारदः। भ्रातृणाम-
प्रजाः प्रेयात् कश्चि चेत् प्रव्रजेत वा विभजेरन् धनं तस्य शेषास्ते
स्त्रीधनं विना। शेषाः संसृष्टिनः सोदरभ्रातरः। संसृष्टिनस्तु
संसृष्टी सोदरस्यतु सोदर इति याज्ञवल्क्यस्मरणात्। संसृष्टिनो
भ्रातुर्धनं संसृष्टी चाहरेत् न पत्न्यादिः, तत्रापि सोदर एवेत्यर्थः।

एवं तर्ह्यस्य मृतस्य पत्नीनां अप्रत्तदुहितॄणाञ्च का गति
रित्यपेक्षिते ऽप्याह नारदः। भरणञ्चास्य कुर्व्वीरन् स्त्रीणा
माजीवनक्षयात्। रक्षन्ति शय्यां भर्त्तुश्चेदाच्छिन्द्युरितरासु तत्।
यातस्य दुहिता तस्याः पित्र्यंशो भरणे ततः। आसंस्काराद्धरे-
द्भागं परतो बिभृयात् पतिरिति। तस्य मृतस्य प्रव्रजितस्य वा
या दुहिता तस्याः परिणयनं ततः पूर्व्वं भरणञ्च शेषाएव कुर्व्वी-
रन्निति द्वितीयश्लोकस्य तात्पर्य्यार्थः प्रत्येतव्यः। यत्र पुनः शेषेषु
भ्रातृषु संसृष्टा अपि सोदराः केचित् सन्ति तत्र ये संसृष्टाः
सोदरा स्तएव विभजेयुः। संसृष्टानान्तु यो भागस्तेषामेव सदृष्यत
इति प्रस्तुत्य भ्रातृणामप्रजा इत्याद्युक्तेः। यत्र त्वसंसृष्टाः सर्व्वे
सोदरा, भिन्नोदरास्तु संसृष्टा, स्तत्र सोदरा एवासंसृष्टाअपि तस्य
धनं विभजेरन्, नतु भिन्नोदराः संसृष्टाः। असंसृष्टापि चादद्यात्
सोदर्य्यो नान्यमातृज इति याज्ञवल्क्यस्मरणात्। असंसृष्टपीत्यपि
शब्दात् अन्यमातृजस्य संसृष्टित्वविशिष्टस्यादानप्रतिषेधो गम्यते।

यदातु शेषेषु सोदराभाव स्तदा भिन्नोदराः संसृष्टा विभ-
जेयुः। संसृष्टौ यौ पुनः प्रीत्या तौ परस्परभागिनाविति वृह-
स्पतिस्मरणात्। अत्र भिन्नमातृजाविति पौनरुक्त्यपरिहाराया-
वगम्यते। यत्तु याज्ञवल्क्येनोक्तं अन्योदर्य्यस्तु संसृष्टी नान्यो-
दर्य्यो धनं हरेदिति तत् सोदरासद्भावविषयमित्यविरुद्धं।

यद्यसंसृष्टिना मेकोदराणामभावएव संसृष्टिभिन्नोदराणां धनग्रहणं तर्हि, एवां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः म्रियेतान्यतरोवापि तस्य भागो न लुप्यते सोदर्य्या विभजेरंस्तं समेत्य सहिताः समं, भ्रातरो येच संसृष्टा भगिन्यश्च सनाभय इति मनुवचनविरोधः स्यात्। चशब्दद्वयेन सर्व्वेषां श्लोकोक्तानां सोदरभ्रातृभगिन्यसोदरभ्रातृणामितरेतरयुक्तानां विभागकर्त्तृत्वावगतेः।

किञ्च ये संसृष्टा भिन्नोदरभ्रातरः तैः सहिताः सोदर्य्याः सनाभयो भगिन्यश्च समेत्य तमलुप्तभागं समं विभजेरन्नित्येवान्वयात् सम्मिलितानामेव कर्त्तृता सहितसमेत्यशब्दाभ्यां सुव्यक्तेति व्यक्तोविरोधः।

केचिद्विरोधपरिहारार्थमिदं वचनमेवं व्याचक्षते। तमलुप्तभागं सोदरा यदि संसृष्टिन स्तदा तएव गृह्णीयु र्नासंसृष्टिनः सोदर्य्या अपि, संसृष्टिनां सोदराणामभावे सर्व्वे सोदराः समेत्य मिलित्वा सहिताः समप्रधानभावेन समन्यूनाधिकं विभजेरन् सोदराणामभावे भगिन्यः सनाभयो विभजेरन् तासामप्यभावे अन्योदर्य्या भ्रातर इति। तदनेकाध्याहारकरणात् अत्यन्तासमञ्जसत्वाच्च उपेक्षणीयं।

अन्ये पुनर्व्विरोधपरिहारार्थं अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यो धनं हरेत्, असंसृष्ट्यपि चादद्यात् संसृष्टो नान्यमातृज इत्येवं याज्ञवल्क्यीयवचनं पठित्वा तद्वचनं यथा प्रतीयमानवचनसमानार्थतया व्याकुर्व्वते तत्र तावदन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यो धनं हरेत् असंसृष्टीत्येतावतो भागस्याक्षरार्थतात्पर्य्यार्थौ व्याख्यातो ऽन्योदर्य्यः सापत्नेयो भ्राता संसृष्टधनं हरेत् न पुनरन्योदर्य्यो धनं हरेदसंसृष्टीत्यनेनान्वयव्यतिरेकाभ्यां अन्योदर्य्यस्य

संसृष्टित्वं धनग्रहणे कारणमुक्तं इति। अपिचादद्यात् संसृष्ट इत्येतावता मध्यभागेन पूर्व्वभागेन सह सम्बन्धः तत्र च पूर्व्वभागान्तःसंसृष्टीतिपूर्व्वभागस्यपदमात्रस्याभिधेयाचरार्थसहिततात्पर्य्यार्थो व्याख्यातः।

असंसृष्टीत्येतदुत्तरेणापि संवध्यते ततश्चासंसृष्टापि संसृष्टिनो धनमाददीत, कोसावित्यतआह संसृष्ट इति। संसृष्ट एकोदरसंसृष्टः सोदर इति यावत्। अनेनासंसृष्टस्यापि सोदरस्य धनग्रहणे सोदरत्वं कारणमुक्तमिति। नान्यमातृज इति भागस्याप्येवकाराध्याहारं कृत्वा तेन सह सम्बद्ध इति संसृष्टमध्यभागान्तर्गतस्य पदस्याभिधेयाचरार्थो व्याख्यातः।

संसृष्ट इत्युत्तरेणापि संवध्यते तत्र च संसृष्टीत्यर्थः नान्यमातृज इत्यत्रैव शब्दाध्याहारेण व्याख्यानं कार्य्यं संसृष्टापि नान्यमातृज एव सोदरसहितः संसृष्टिनो धनं नाददीतेति कृतस्त्रस्योक्तस्य तात्पर्य्यार्थो मानववचनसमानार्थतया दर्शितः।

एवञ्च संसृष्टापि चादद्यादित्यपिशब्दश्रवणात् संसृष्टो नान्यमातृज एवेत्यवधारणनिषेधात् असंसृष्टसोदरस्य संसृष्टभिन्नोदरस्य च विभज्य ग्रहणं कर्त्तव्यमित्युक्तं भवति द्वयोरपि धनग्रहणकारणस्यैकैकस्य सद्भावादिति, तदेतदेव व्याख्यातृभ्यः सेभ्य एव रोचते न पुनः प्रतिवक्तृभ्यो वचनतोऽत्यन्ताप्रतीतस्यैव स्वप्रज्ञाबलात् वचनार्थत्वाङ्गीकरणात्।

तस्मादत्र मनुयाज्ञवल्क्यवचनयो र्यथाप्रतीयमानार्थयो र्विषयव्यवस्थयैवाविरोधो न पुनरर्थैक्याभिधानवशादिति, सैवोच्यते। मनुवचनं तावत् स्थावरतदितरधनसद्भावविषयं प्रजापतिना तत्रैव संसृष्टासंसृष्टानां विभज्य ग्रहणाभिधानात् अन्तर्धनञ्च

यद्द्रव्यं संसृष्टानाञ्च तद्भवेत् भूमिं गृहं त्वसंसृष्टा विभजेयुः इति। संसृष्टानां भिन्नोदरभ्रातॄणां यथांशतो गूढ़धनं द्विपदादिरूपं भवेत् असंसृष्टाः सोदरभ्रातृभगिन्यस्तु यथांशतो गृह्णीयुरित्यर्थः

एवञ्च पारिशेष्यात् केवलस्थावरसद्भावविषये केवलद्रव्यसद्भावविषये वा याज्ञवल्क्यवचनं द्रष्टव्यं। यदा तु संसृष्टभिन्नोदराभाव स्तदा पिता पितृव्यो वा यः संसृष्टी स्यात् संसृष्टिनि प्रेते संसृष्टो ऋक्थभागिति गौतमस्मरणात् पिता पितृव्यः संसृष्टो न विद्यते तदा त्वसंसृष्टिभिन्नोदरः गृह्णीयात् तदभावे त्वसंसृष्टः पिता, तदभावे माता, तदभावे तथाच शङ्खः। स्वर्य्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं पितरौ हरेयातां ज्येष्ठा वा पत्नी। स्वर्य्यातस्यापुत्रस्य पिता भ्राता वा संसृष्टस्य संसृष्टाभावे भिन्नोदरासंसृष्टस्य द्रव्य मित्यर्थः। तथाच नारदः। संसृष्टानान्तु यो भाग स दृश्यते। अतोऽन्यथा नांशभाजो निर्व्वीजेष्वितर अतोऽन्यथा संसृष्टेषु सत्सु भिन्नोदरभ्रात्राद्यसंसृष्टिन भाजः

यदा तु सर्व्वे संसृष्टा निर्व्वीजाः सन्तानरहिताः भवे चेतरान् भिन्नोदरान् भ्रातॄनियात् संसृष्टानां भागं प्र त्यर्थः। तत्रचार्थं भ्रातृगामि द्रव्यमित्यादि शङ्खवचने क्रमेः ज्येष्ठाग्रहणं सुसंयतत्वादिगुणवत्याः कथनार्थं न पुन र्ग निवृत्त्यर्थं पुनरपि तदभाव इति वक्तव्ये वाशब्दः प्रयु सान्यात् तथाहि वाशब्दात् विकल्पोवगम्यते। नचात्र रूपवस्तुनि तुल्यवद्विकल्पः सम्भवति, नहि वस्तुनि विक-

न्यायशास्त्रसिद्धत्वात्। तस्मादत्र वाशब्दादभावविकल्पावगतेः फलस्वाम्यमस्त्येव।

एवञ्चायं क्रमः। भ्रात्रभावे पिता हरेत्, तदभावे माता, तदभावे पत्नी। ततश्च विभक्तविषयोक्त पत्नीदुहित्रादिक्रमविरुद्धत्वात् तदविरोधायैतत् संसृष्टांशविषयमिति कल्प्यते विभक्तविषयोक्त नैयायिक पत्नीदुहित्रादिक्रमोऽस्मिन् विषये शङ्खोक्तवाचनिकक्रमेण बाध्यते। वाचनिक एवायं क्रमः। अस्मिन् क्रमे कस्यचिन्न्यायस्याभावात्। अनेन क्रमेण यदा पत्नी भ्रातृपुत्रादयश्च सपिण्डा विद्यन्ते तदाह नारदः। मृते भर्त्तरि भार्य्यास्तु अभ्रातृपितृमातृकाः। सर्व्वे सपिण्डाः स्वधनं विभजेरन् यथांशतः। भार्य्याः पत्न्यः। अभ्रातृपितृमातृका याः पत्युः पितृमातृभ्रातॄणामभावविशिष्टा इत्यर्थः। अनेन द्वन्द्वसमासेन भ्रातृपितृतया अभ्यर्हितपित्रादिपदस्य पूर्व्वनिपातनं परित्यज्य वैपरीत्येन समासवचनं कुर्व्वता नारदेन संसृष्टापुत्रद्रव्यं प्रथमं भ्रातृमातृपितृगामि तदभावे सर्व्वत्र वृत्तस्वपत्न्यभिगामीति दर्शितं।

एवञ्च संसृष्टविषये पत्नीनां न गौणपुत्राभावे दायहरत्वं किन्तु भिन्नोदरसंसृष्टभ्रातृपितृमातॄणामभाव इति मन्तव्यं। सर्व्वे सपिण्डा इत्यादेरयमर्थः। संसृष्टापुत्रस्य ये भ्रातृमातृव्यतिरिक्ताः सपिण्डा भ्रातुष्पुत्रादय स्ते सर्व्वे स्वधनं पूर्व्वमपुत्रधनेन सह स्वपित्रादीनां संसृष्टं तदूर्द्धं तत् पत्नीभिः सह यथांशतो भ्रातृपुत्राणां भ्रात्रंशः भ्रातृभार्य्याणां भर्त्रंशः इत्येवमंशादिक्रमेण विभजेयुरिति।

पत्नीनामभावे तु संसृष्टापुत्रांशं तद्भगिनी लभेत। तथाच वृहस्पतिः, यातस्य भगिनी यातु ततोऽंशं लब्धुमर्हति। अनपत्यस्य

धर्म्मोऽयमभार्य्यापितृकस्य च। साच दत्ताप्यदत्ता वा सोदरे तु मृते सति। तस्यांशन्तु हरेत् सैव द्वयो र्व्यक्तं हि कारणं। अभार्य्यापितृकस्य चेति चशब्दार्थः।

भगिन्यभावे केवलाः सपिण्डाः संसृष्टाः, अनन्तरं सपिण्डाद्यस्तस्य तस्य धनं भवेदित्युक्तक्रमेणैव विभजेरन्निति प्रतिपदोक्तानामभावात्। तथाच सएव मृतो ऽनपत्यो ऽभार्य्यश्चे दभ्रातृपितृमातृकः, सर्व्वे सपिण्डा स्तद्दायं विभजेरन् यथांशतः, तद्दायं संसृष्टिदायं मृतोऽनपत्यो भिन्नमातृकस्य भ्रात्रादिप्रतिपदोक्तधनग्राहिगृहीत श्चेदिति तात्पर्य्यार्थः।

सपिण्डाभावेतु विभक्तसंस्थित द्रव्यवदेव संसृष्टस्वर्य्यात द्रव्यमपि समानोदकादिगामीत्यनुसन्धेयं। संसृष्टद्रव्यमधिकृत्य सपिण्डेभ्य ऊर्द्ध्वं विशेषस्मृतेः।

इति स्मृतिचन्द्रिकायां संसृष्टभ्रात्रादिविषयाणि।

---

## विभक्तजविभागः।

### अथ विभक्तजपुत्रादि विभागः।

तत्र जीवद्विभागोत्तरकालजातं पुत्रं प्रत्याह विष्णुः। पितृ र्व्विभक्ता विभागानन्तरकालोत्पन्नस्य भागं दद्युरिति। अस्यार्थः, अविस्पष्टगर्भायां पितृभार्य्यायां ये पुत्रा विभक्ता स्ते स्वविभागोत्तरकालजातस्य पुत्रस्य तत्सद्भावाज्ञानतः स्वभाग-प्रविष्टतद्भागांशानुद्धृत्य दद्युरिति पिता तु स्वभागप्रविष्टतद्भागांशं न दद्यात्

किन्तु पूर्व्वजे दत्तांशग्रान गृहीत्वा विभक्तजेन सह वसेत्, तस्याप्राप्तव्यवहारस्य सहवासेन पालनीयत्वात्। अतएव पितृविभक्ता भागं दद्युरित्युक्तं, न पुनः पिता पितृविभक्ताश्च भागं दद्युरिति। यत्तु गौतमेनोक्तं, विभक्तजःपित्र्यमेवेति, भागं गृह्णीयादिति शेषः। तदेतत् पितृविभक्तपुत्रे विभक्तजस्य भागदानात् प्रागेव पितरि मृते द्रष्टव्यं। तथाच पूर्व्वजे भागो न देयः पित्र्यमेवेत्येवकारकरणात्।

यत्तु बृहस्पतिनोक्तं, पित्रा सह विभक्ता ये सापत्न्या वा सहोदराः, जघन्यजास्तु एतेषां पितृभागहरास्तु त इति। तत्र पितृभागहरा इत्यस्य पितृभागएव भागहरा इत्यर्थोऽवगन्तव्यः। तदेतद्विभागादूर्द्धमेव ये गर्भस्था भूत्वा जाता स्तद्विषयं।

जघन्यजानां पितृभागादेव भागहरत्वे कारणमप्याह सएव। अनीशः पूर्व्वजः पित्र्ये भ्रातृभागे विभक्तज इति। अनीशः अस्वामी, अनीशः पूर्व्वजः पित्र्य इत्यत्र पित्रा सह विभक्तत्वादित्यभिप्रायः प्रत्येतव्यः। भ्रातृभागे विभक्तज इत्यत्र भ्रातृभागे विभक्तजधनसंक्रमणाभावात् इत्यभिप्रायोऽध्यवसेयः।

प्रथमोक्ताभिप्रायेण विभक्तजाग्रजानां अनीशतां पित्र्ये प्रसाध्य तद्बलादन्यदप्याह सएव। पुत्रैः सह विभक्तेन पित्रा यत् स्वयमर्जितं विभक्तजस्य तत् सर्व्वमनीशाः पूर्व्वजाः स्मृताः। सर्व्वग्रहणं विभागात् पश्चादर्जिते पित्र्ये पूर्व्वजसुतानामगृहीतांशोऽस्तीति शङ्का निवृत्त्यर्थं।

एवञ्च पूर्व्वजा स्तदितरे चान्योऽन्यसम्बन्धिजनपदस्वामिनः परस्परधने किन्तु ईषदत्र भेदोस्तीत्याह सएव। यथा धने तथाचर्णे दानाधानक्रयेषुच परस्परमनीशा स्ते मुक्ता शौचोदक-

क्रियां। केवलमशौचोदकक्रियादौ परस्परमनीशा न धनादा-विव्यर्थः। आधानं आधिः उक्तं ऋणादानादौ।

अनीशत्वं संसर्गाभावे सतीत्याह सएव। संसृष्टौ यौ पुनः प्रीत्या तौ परस्परभागिनाविति।

यत् पुनर्म्मनुनोक्तं। ऊर्द्धं विभागाज्जातस्तु पित्र्यमेव हरेद्धनं, संसृष्टास्तेन ये वा स्यु र्व्विभजेत स तैः सहेति। पित्र्यमेवेत्युत्त-रार्द्धेऽपि सम्बध्यते अतो न प्राक्तनेन विरुद्धं। तदेतद्विभक्तजेन पितुः सहवासदशायां मृते पितरि द्रष्टव्यं।

अजीवद्विभागोत्तरकालजन्तु पुत्रं प्रत्याह याज्ञवल्क्यः। विभक्ते तु सुतो जातः सवर्णायां विभागभाक्। दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात्। पितुरूर्द्धमविस्पष्टगर्भायां पितृभा-र्य्यायां भ्रातृषु परस्परं विभक्तेषु पश्चात् सुतो यो जातः स विभा-गभाक्। भाग एव विभागोऽंश इति यावत्। सर्व्वस्याविभक्त-धनादुद्धृतभागभागीति यावत्। यद्वा दृश्यात् दृश्यमानगृहोपस्कर-वाह्यदोह्याभरणभृत्यादेः सकाशात् एवायव्ययविशोधिता दुपचय-व्ययाभ्यामवधारितेयत्ताका द्विभक्ता दुद्धृतो भाग स्तस्य विभक्त-जस्य स्यादित्यर्थः। दृश्यग्रहणं गूढ़द्रव्यजाताद्विभक्तादुद्धृतांश-कल्पनानिवृत्त्यर्थं। विभक्तजस्य अतत्त्वाविशेषेऽपि विभागकाले दुर्व्विज्ञेयेपि सद्भावशालित्वात् तद्भागे ह्रासकरणं न्याय्यमिति मन्यते न पक्षान्तरयुक्तमिति मन्तव्यं। दुर्व्विज्ञेयसद्भावात्तद्दोष-कृतेति प्रथमपक्षोऽपि नात्यन्तानुचित इति मन्तव्यं।

यत्र पुन र्व्विभक्तागतादौ पुरुषदोषकृताविभागात् पश्चादागमः तत्र विभक्तागतस्य ह्रासपक्षएव न समानभागपक्षान्तरोन्मेषः। अतएव तत्र भागह्रासमेवाह बृहस्पतिः। गोत्रसाधारणं त्यक्ता

योऽन्यदेशं समाश्रितः अर्थशस्त्वागतस्यांशः प्रदातव्यो न संशयः । गोत्रसाधारणं त्यक्त्वा सर्व्वसहवासि-निवासदेशमुत्सृज्य योऽत्यन्त-दूरदेशनिवासी तस्य सद्भावाज्ञानतः शेषैरेव विभज्य सर्व्वस्मिन् धने गृहीते पश्चादागतस्य तस्यांशो ऽर्थशो विभक्तद्रव्यादुद्धृत्य दातव्य इत्यर्थः । अत्र इतरेषां विभक्तागतसद्भावाज्ञानं तद्दोष इति पद्मान्तरोन्मेषः । अतएव न संशय इत्युक्तं ।

एवमतिदीर्घकालप्रोषितस्य सद्भावाज्ञानतः कृते विभागे सत्यागतस्येत्याह सएव । क्षेत्रं लेख्यं गृहं चैत्रं यस्य पैतामहं भवेत् । चिरकालप्रोषितोऽपि भागभा-गागतस्तु सः । भागभाक् अर्थभागीत्यर्थः । आगतोऽपि भागादूर्द्धमागतः, पौत्रादिस्तु विभक्तागतः क्रमायातद्रव्यमात्रेऽंशभागीत्याह सएव । तृतीयः पञ्चमश्चैव सप्तमो योऽपि वा भवेत् जन्मनामपरिज्ञाने लभेतांशं क्रमागते ।

कस्यचिद्विभक्तागतस्य क्रमागतेष्वपि भूमात्रांशो देय इत्याह सएव । यं परम्परया मौलाः सामन्ताः स्वामिनं विदुः । तदन्वय-स्यागतस्य दातव्या गोत्रजै र्मही । आगतस्य विभागादूर्द्धमिति शेषः । विभागादूर्द्धमागतस्य वा स्वभागं ग्रहीतुं प्रवृत्तस्य दृष्टा-दृष्टप्रमाणेनादौ तावदात्मनः परायत्ते द्रव्ये स्वाम्यं साधयन् भाग-ग्रहणाधिकारी भवति नान्यथेत्याह सएव । कृते कृते वा विभागे रिक्थी यत्र प्रवर्त्तते, सामान्यत्वे भवेद्यत्तु तत्र भाग-हरस्तु सः ।

इति स्मृतिचन्द्रिकायां विभक्तजपुत्रादि विभागः ।

## अथ लुप्तविभागः ।

तत्र मनुः । ऋणे धने च सर्व्वस्मिन् प्रविभक्ते यथाविधि पश्चाद्दृश्येत यत्किञ्चित् तत् सर्व्वं समतां नयेत् । विभागकाले यद्दृश्यते ऋणं वा धनं वा सर्व्वस्मिन् यथाविधि पितृरिक्थहराः पुत्राः सर्व्व एव समांशिनः विद्याकर्म्मयुतस्तेषामधिकं लब्धु मर्हति इत्यादिविध्यनतिक्रमेण विभक्ते पश्चात् कालान्तरे यत्किञ्चिदृणं प्रोषितोत्तमर्णस्य, यत्किञ्चिद्धनं प्रोषितनिक्षेपधारकादिसमीपस्थं तयोः समागमादिवशात् दृश्यते तत् सर्व्वं समतां नयेत् न पुन र्व्विद्याकर्म्मयुते ऽधिकधनदानमित्यर्थः, पश्चाद्दृश्येतेति समताभिधानात् । पूर्व्वदृष्टे ऋणे धनेवा विषमतास्तीत्यवगम्यते ।

एवं विभागकाले यद्वस्तु येन केनचिदन्त्र्यकेन परकीयमिति बुद्ध्युत्पादनादिना प्रच्छादितं विभागोत्तरकाले विचार्य्यमाणे स्वकीयमेवेति ज्ञातं चेत् तत् समतां नयेदित्याह कात्यायनः । प्रच्छादितन्तु यद्येन पुनरासाद्य तत् समं भजेरन् भ्रातृभिः सार्द्धं समावेऽपि हि तत्सुताः । पितुरभावे ऽपि सर्व्वे सुता एव तदासादितं विभजेरन्नित्यर्थः ।

एवं सहवासिषु केनचित् किञ्चिद्धनमपहृतं कथञ्चिद्विभागादूर्द्धं दृष्टं चेत् समतां नयेत् तथाच याज्ञवल्क्यः । अन्योन्यापहृतं द्रव्यं विभक्ते यत्तु दृश्यते तत् पुनस्ते समैरंशै र्व्विभजेरन्निति स्थितिः । ते सर्व्वे विभक्ता इत्यर्थः ।

अपहृतवत् दुर्व्विभक्तमपि समतां नयेत् तथाच कात्यायनः । अन्योन्यापहृतं द्रव्यं दुर्व्विभक्तञ्च यद्भवेत् पश्चात् प्राप्तं विभज्येत

समभागेन तद्भागः। दुर्विभक्तं शास्त्रोक्तप्रकारान्तरेण विषमतया विभक्तं मिथोऽपहृतं दुर्विभक्तवदन्याहृतं नष्टं लब्धञ्च समतां नयेत्।

तथा विभक्तेनार्जितं धनम् अर्जकस्यैव भवति न दायादाना-मित्याह स एव। विभक्तेनैव यत् प्राप्तं धनं तस्यैव तद्भवेत्। हृतं नष्टञ्च तल्लब्धं प्रागुक्तञ्च पुनर्भजेत्। प्रागुक्तमिति मिथोप-हृतं दुर्विभक्तञ्च। दृष्टान्तार्थमत्र पुनरुक्तोपादानं एवञ्च प्रागु-क्तवद्विभजेदित्यर्थः। तेन परापहृतस्य नष्टलब्धस्य च सममेव विभजनमनेनोक्तमिति मन्तव्यं। एवं मन्वादिभि र्विभागात् पश्चाद्दृश्यमानस्यैव साधारणद्रव्यस्य पुनर्विभागविधानात् पूर्वोक्त-कृतविभागः सम्यक् जातः इति गम्यते। अनेन विभागादूर्द्ध किञ्चित् सामान्यद्रव्यदर्शनेऽपि पुरुषाणां विभक्तत्वं पूर्वमेव सम्पन्नं मन्तव्यं।

यत् पुन र्मनुनोक्तं विभागेतु कृते किञ्चित् सामान्यं यत्र दृश्यते नासौ विभागो विज्ञेयः कर्त्तव्यः पुनरेव हीति। तद्विभक्तै र्विभक्तद्रव्यैस्वाधव्ययादिकरणात् प्रागेव दृष्टविषये द्रष्टव्यं, अन्यथा पूर्वोक्तसर्व्ववचनविरोधापत्तेः। पुनर्विभागविधानस्य प्रयोजनं पश्चाद्दृष्टांशे ऽप्युद्धारादिकरणं।

इति स्मृतिचन्द्रिकायां लुप्तविभागः।

## अथ विभक्तकृत्यं।

तत्र नारदः। यद्येकजाता बहवः पृथग्धर्म्माः पृथक्क्रियाः। पृथक्कार्य्यगुणोपेता न चेत् कार्य्येषु सम्मताः। स्वभागान् यदि दद्युस्ते विक्रीतारस्तथापि वा। कुर्य्युर्यथेष्टं तत् सर्व्वमीशास्ते स्वधनस्य वै। अस्यार्थः। एकस्माज्जाता यदि बहवो नैके विभक्ता स्तदा पृथक् परस्परानुमतिमन्तरेण धनसाध्याग्निहोत्रादिकर्म्मकारिणः स्यु स्तथैव वित्तव्यायायत्त कृष्यादिलौकिकक्रियाकारिणो भवेयु स्तथापि भिन्नभाण्डादिकर्म्माङ्गद्रव्योपेताः स्युः तथा स्वस्वकार्य्येषु भ्रातरो नचेत् सम्मता स्तदाताननादृत्य स्वकार्य्यं कुर्य्यु स्तथा ते विभक्ता यदि स्वभागान् विक्रीणीयु रादद्युरथापि वा तत् सर्व्वं यथेष्टं कुर्य्यु स्ततस्ते विभक्ताः स्वधने स्वतन्त्रस्वामिन इति।

यत्तु बृहस्पतिनोक्तं। अविभक्ता विभक्तावा दायादाः स्थावरे समाः। एकोऽप्यनीशः सर्व्वत्र दानाधमनविक्रये इति। आधमनमाधीकरणं। तदेतद्यत्र समतया स्थावरविभागमपि दुष्करं मत्वा तत्फलमेव काले ग्रहीष्यामो विभज्येत्यभिसन्धिना तदितरधनविभागतोदायादा विभक्ता भवन्ति तद्विषयं तत्र स्थावरे त्वेकैकस्य स्वतन्त्रस्वामित्वाभावात्।

विभक्तस्य कृत्यान्तरमप्याह सएव। येनांशो यादृशो भुक्त स्तस्य तन्न विचालयेदिति। तथाच राजानं प्रत्याह सएव। स्वेच्छाकृतविभागो यः पुनरेव विसम्वदेत् सचराज्ञांशकेस्थाप्यः शासनीयोऽनुबन्धकृत्। अनुबन्धो निर्व्बन्धः आग्रह इति यावत्।

इति स्मृतिचन्द्रिकायां विभक्तकृत्यं।

## विभागसन्देहे निर्णयः ।

### अथ विभागधर्म्मसद्भावनिर्णयहेतवः ।

तत्र याज्ञवल्क्यः । विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः । विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः । यौतकैः पृथक्कृतैः । विभागग्रहणं तद्धर्म्माणां प्रदर्शनार्थं । अतएव नारदः । विभागधर्म्मसन्देहे दायादानां विनिर्णयः । ज्ञातिभि र्भागलेख्येन पृथक् कार्य्यप्रवर्त्तनात् । नासीदावयोर्व्विभाग इति स्वरूपापलापादिना, सर्व्वस्मादविभाज्यात् नावयो र्व्विभाग इति धर्म्मापलापादिना वा तद्धर्म्मसद्भावसन्देहे दायादानां ज्ञात्यादिसाक्षिभि र्व्विभागलेख्येन वा पृथक्कार्य्यप्रवर्त्तनादियुक्तिभि र्निर्णयो ज्ञेयः, पृथक् कार्य्यप्रवर्त्तनं पृथक् पृथक् वैश्वदेवभिक्षादानातिथिपूजादि धर्म्मप्रवर्त्तनं, कथं तस्य युक्तमित्यपेक्षिते अनन्तरमुक्तं तेनैव । भ्रातॄणामविभक्तानामेको धर्म्मः प्रवर्त्तते । विभागे सति धर्म्मोऽपि भवेत्तेषां पृथक् पृथक् । धर्म्मो वैश्वदेवादिः । तथाच वृहस्पतिः । एकपाकेन वसतां पितृदेवद्विजार्च्चनं एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे । एवञ्च पृथक् वैश्वदेवादिप्रवर्त्तन मविभक्तेष्वविद्यमानं विभक्तत्वमवगमयेदिति भागसन्देहनिर्णायक युक्तितयोक्ति र्युक्तैत्यनवद्यं ।

युक्त्यन्तराणि वक्तुं परस्परसाक्षित्वादिकं तावद्विभक्तानां विधास्यन् तत् प्रतिषेधमविभक्तेषु सएवाह । साक्षित्वं प्रातिभाव्यञ्च दानं ग्रहणमेवच । विभक्ता भ्रातरः कुर्य्यु र्नाविभक्ताः परस्परं । ग्रहणं प्रतिग्रहः । एवञ्च परस्परसाक्षित्वादियुक्तिभ्यो विभागसद्भावावगतिः सिद्ध्यत्येव । अतएवानन्तरमुक्तं तेनैव एषामेताः

क्रिया लोके प्रवर्त्तन्ते स्वरिक्थिषु विभक्तानवगच्छेयु र्लेख्यमप्यन्तरेण तां । प्रवर्त्तन्ते व्यस्ताः समस्ता वेति शेषः ।

एवं ऋणग्रहणमपि ऋक्थिषु प्रवर्त्तमानं विभक्तत्वावगमकं अविभक्तेष्वप्रवर्त्तनात् । तथाच याज्ञवल्क्यः । भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैवहि । प्रातिभाव्यमृणं साक्ष्यमविभक्ते नतु स्मृतं । ततश्च ऋणदातुरपि ऋणग्रहीतृसकाशादिभक्तत्वंसिद्धं। अतएव बृहस्पतिः । पृथगायव्ययधनाः कुशीदञ्च परस्परं । वणिक्पथञ्च ये कुर्य्यु र्व्विभक्ता स्ते न संशयः । कुशीदं वृद्ध्यर्थं धनप्रयोगः । वणिक्पथो वाणिज्यं । परस्परमित्युभयत्र संबध्यते एवं हेतुतो निर्णयः ।

तत्र श्रेष्ठनिर्णायकप्रमाणाभावे कार्य्यं इत्याह सएव । साहसं स्थावरस्वाम्यं प्राग्विभागस्य रिक्थिनां । अनुमानेन विज्ञेयं न स्यु र्यत्र च साक्षिणः । प्राग्विभागो विभागविवादात् प्राक्ज्ञातो विभागः । अनुमानं युक्ति साहसादि ।

युक्तिप्रदर्शनार्थं कांश्चित् साधकानाह सएव । कुलानुबन्धव्याघातहोढं साहससाधकं स्वस्य भोगः स्थावरस्य विभागस्य पृथक् पृथक् । कुलानुबन्धः पूर्व्वपुरुषवैरानुबन्धः, व्याघातः परस्परस्य, होढं बलादपहृतलोप्तदर्शनं । स्वस्य भोग आत्मनो भोगः । अत्र कात्यायनः । वसेयु र्दश वर्षाणि पृथक् धर्म्माः पृथक्क्रियाः । भ्रातर स्तेऽपि विज्ञेया विभक्ताः पैतृकाद्धनात् । भ्रातृशब्दस्य ऋक्थसम्बन्ध्युपलक्षणार्थः । पैतृकग्रहणं, दायधनोपलक्षणार्थं । परमार्थतो दायग्रहणाभावेऽपि पश्यतो ऽब्रुवतो भूमे र्हानि र्व्विंशतिवार्षिकी । परेण भुज्यमानाया धनस्य दशवार्षिकीतिच, फलानुसारेण विभक्ता एवेति ज्ञातव्या इत्यर्थः । दशवर्षादर्व्वाक् पुनःप्रागुक्तयुक्तिभिरेव निर्णयः ।

तथा सामान्यसिद्धिसम्भावनया निर्णयाभावयुक्तिष्वपि असमर्थासु शपथैरेव सम्भवेदिति वचनात् यद्यपि शपथप्राप्तिः तथापि शपथेन निर्णयो न कार्य्यः। यत आह वृद्धयाज्ञवल्क्यः। विभागधर्म्मसन्देहे बन्धुसाक्ष्यभिलेखनैः विभागभावना कार्य्या न भवेद्दैविकी क्रियेति।

कथं तर्हि युक्तिष्वसमर्थासु निर्णय इत्यपेक्षिते मनुः। विभागे यत्र सन्देहो दायादानां परस्परं पुनर्व्विभागः कर्त्तव्यः पृथक् स्थानस्थितैरपि, यत्र सन्देहो युक्तिभिरसमर्थाभि र्नापैतीति शेषः।

यत् पुनस्तेनैवोक्तं सकृदंशो निपतति सकृत् कन्या प्रदीयते सकृदाह ददानीति त्रीण्येतानि सकृत् सकृत्। एतद्युक्त्यादिभि रपगतसन्देहविषयमिति सर्व्वमनवद्यं।

इति स्मृतिचन्द्रिकायां विभागसद्भावधर्म्महेतवः।

समाप्तास्र दायविभागाख्यस्य विधिवितानाः।

---

अत्र प्रकरणेतु पूर्व्वविभागकालप्रदर्शनं। जीवद्विभागविषमविभागप्रकारः। अजीवद्विभागविषयाणि। दानार्हविषयाणि। विभाज्यनिरूपणं। अविभाज्यनिरूपणं। पुत्रपौत्रादिभागकल्पने भागकल्पनाविषयाणि। स्त्रीधनभेदः। स्त्रीधनकृत्यं। स्त्रीद्वारागतधनविभागः। गौणपितृद्वारागतधनविभागः। पुत्रद्वारागतधनविभागे पत्नीविषयाणि, दुहित्रादिविषयाणि, संसृष्टभ्रात्रादिविषयाणि, विभक्तजपुत्रादिविभागः। लुप्तधनविभागः। विभक्तकृत्यविभागः तद्धर्म्मसद्भावनिर्णयहेतवः।

इति स्मृतिचन्द्रिकायां दायविभागाख्यपदप्रकरणानुक्रमः सम्पूर्णः।

## तदयं प्रकरणसंक्षेपः।

जीवति पितरि मृतेऽपि विभागार्हं धनं दायशब्देनोच्यते स्वत्वद्भूलस्य विभागः। ऊर्द्धं पितुश्चेति पितृधनविभागकालः। मातुरूर्द्धमिति मातृधनविभागकालः। अन्यतरधनविभागे ऽन्यतरस्योर्द्धगमनप्रतीक्षणानुपयोगात्, जीवति पितरि पुत्राणां जन्मना स्वाम्यं भवति किन्तु विभागस्वातन्त्र्यं नास्ति, वचनात्। पितुरनुमतिमन्तरेणार्थोपभोगे व्यये दासादिपरिजनस्यापराधेषु शिक्षार्थमाक्षेपे धर्मकर्मणि चास्वातन्त्र्यं। अर्थधर्मयोरस्वातन्त्र्यादिति हारीत स्मरणात्।

स्वत्वन्तु लौकिकं, न शास्त्रैकसमधिगम्यमपि लौकिकस्याव्यवस्थितत्वात् स्वामी रिक्थक्रय इत्यादि गौतमवचनं नियमार्थं, सिद्धे सत्यारम्भो नियमार्थेति न्यायात् नियमफलन्तु चौर्य्याद्यपहृते न स्वाम्यमिति तत्र राजदण्डेन लोकप्रसिद्ध्यभावात्। व्यसनादिना सदोषे पितरि अर्थादानादौ प्रथमं समर्थज्येष्ठस्यैव स्वातन्त्र्यं, असमर्थे तस्मिन् यथासामर्थ्यं मध्यमादीनामपि स्वातन्त्र्यं। अतिवृद्धत्वादिभिः अस्वतन्त्रतामापन्ने पितरि तदनिच्छयापि भवति पितृधनविभागः, मातृरजोनिवृत्तौ पितुरपत्योत्पत्तिमसाध्यभावे स्वापत्यानाञ्च विवाहकृत्ये च कृते पितुर्द्धनस्पृहायां गतायां पितुरननुमत्यापि पुत्रकर्त्तृकः पितुः स्वोपार्जितधनविभागोऽपि शास्त्रार्थः। पितुरूर्द्धं पृथक् पृथक् व्ययाभावात् अर्थोपचयार्थं सहवासपक्षोऽपि शास्त्रसम्मतः धर्मवृद्धिकामनयातु विभागोऽपि कार्य्यः। एकपाकेन वसतां पितृदेवद्विजार्चनं एकं भवेद्विभक्तानां तदेव स्याद् गृहेगृहे इति स्मरणात्, पितुरिच्छया विभागो द्विविधः।

बन्ध्वादिसमक्षं, रहसिवा, समविभागः ज्येष्ठभ्रातु र्भागाधिकदाना दिभागात् धर्म्मादनपेतः। विषमविभागस्यापि शास्त्रार्थः। विषमविभागो ज्येष्ठस्य विंश उद्धार इत्युक्तव्यतिरिक्तः एकाधिकं हरेज्ज्येष्ठ इत्युक्तोद्धारप्रकार विशेषः।

ज्येष्ठभ्रातुर्भागाधिक्ये कृते मध्यमादिभिः पित्रास्मभ्यं न्यूनांशो दत्तः समभागपक्षे ज्येष्ठेनच मह्यं न्यूनांशो दत्त इति चानुशयो न कार्य्यः। कारणं विना स्वेच्छया स्वार्जितधनेऽपि कृते विषमविभागे ऽनुशये सति पुत्रैरपालनीय एव। पितृकर्त्तृक जीवद्विभागे अतिक्रान्तपुत्रलाभकालः पिता आत्मनो द्वावंशौ गृह्णीयात् नतु यदाकदाच विभागे। स यद्येकपुत्रःस्यात् द्वौ भागावात्मनः कुर्य्यादिति वचनात् एकपुत्रः अतिक्रान्तपुत्रलाभकालः गलितवयस्क इति यावदिति तदर्थात्। भागद्वयग्रहणेनापि अशनाद्यभावेन यदि पिता क्षीणः तदा कुटुम्बभरणपर्य्याप्तं धनं पुत्रेभ्यः पुनर्गृह्णीयात्, पुत्रोऽपि अशनाद्यभावे क्षीणः पुनर्व्विभागं गृह्णीयात्। यद्युपदस्येत् क्षीणांस्च संविभजेदिति हारीतस्मरणात् यथा पिता पुत्रं क्षित उपधावति तादृगेव तद्दिति यथा पुत्रः पितरं क्षित उपधावति तादृगेव तद्दिति श्रुतेश्च। पितृकर्त्तृक समभागपक्षे प्रतिपत्नि भर्त्तृसमभागं प्राप्नुयादिति। यत्र पुत्रेषु कस्यापि धनार्जनसामर्थ्येन पितृधनं ग्रहीतुं नेच्छा, तत्रासौ यावत् ग्रहीतुमिच्छति तावत्तस्मै दत्त्वा पृथक् क्रिया पित्रा कार्य्या, शक्तस्यानीहमानस्येति वचनात्। पितरि जीवति पुत्रकर्त्तृकः समभागएव शास्त्रार्थ इति।

अजीवद्विभागप्रकारः। पितुरूर्द्धं भ्रातृभि र्व्विभागे क्रियमाणे समभागएव। द्वयोर्भ्रात्रोरपि विभागोऽस्ति अप्रगल्भेष्वनुजेषुच

पर्य्यन्तं सहवास एव श्रेयान् अप्रगल्भानुजानां पालन-

पुरःसरं ज्येष्ठो योगक्षेमार्थं सर्व्वं धनं गृह्णीयात् तादृशज्येष्ठाभावे योवा शक्तो मध्यमो वा कनिष्ठोवा गृह्णीयात्, सर्व्वमेव हरेज्ज्येष्ठ इति संग्रहवाक्यात्। पितुरूर्द्धं पुत्रकर्त्तृके पैतृकधनविभागे पुत्राः पैतृकर्णं धनञ्च विभज्य गृह्णीयुः कुटुम्बार्थं येन केनापि कृत मृणं पुत्रैर्व्विभागकालएवापाकृत्य विभागः कार्य्यः विभागकाले च पित्रा प्रतिवस्तु नवश्राद्धसम्पादनार्थं धनं रक्षित्वा दत्त्वा वा पैतृकधनविभागः कार्य्यः नवश्राद्धपैतृकर्णापाकरणार्थधनादभ्यधिकञ्चेत् पैतृकधनं तदा विभागकालएव नवश्राद्धार्थं धनं देयं पैतृकञ्चर्णं परिशोध्यं, यच्छिष्टं पितृदायेभ्य इति नारदीयात् अधिकञ्चेद्धनवदृणमपि विभजनीयं विभजेरन् सुता इति याज्ञवल्कीयात् यः पुत्रो धनार्जनक्षमः पैतृकं धनं विभज्य ग्रहीतुं नेच्छति तत्सन्तानत स्तदंशनिमित्तक विवादपरीहारार्थं तस्मै किञ्चिदसारमपि मूलधनार्थं दत्त्वावशिष्टं पुत्रैर्व्विभजनीयमिति भ्रातॄणां यस्तु नेहेतेति मानवात् भ्रातृषु कस्यचित् गार्हस्थ्यसम्पादनार्थं कर्म्मभूयस्त्वं स्यात् तदा तस्य समभागादभ्यधिकेन धान्यादिना इतरै र्भ्रातृभि र्व्विवर्द्धनं कार्य्यं कुटुम्बार्थेषु चोद्युक्त इत्यादि नारदीयादिति।

अथ विभागप्रकार संक्षेपः। विषमविभागप्रकारो नातीवप्रयोजनकः इदानीमुद्धार-विषमभागौ न स्तः। यथा नियोगधर्म्मोद्य नानुबन्ध्यावधोऽपिवा तयोद्धारविभागोऽपि नैव सम्प्रतिवर्त्तते, अद्य सम्प्रति शब्दौ कलियुगमभिसन्धायोक्तौ, अतएव पुराणं ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा, कलौ पञ्च न कुर्व्वीत भ्रातृजायां कमण्डलुं।

अथान्यान्यपि अजीवद्विभाग विषयाणि। पितुरूर्द्धमपि गर्भ-

स्यापत्यानां मातृणां भ्रातृभार्य्याणाञ्च प्रसवं प्रतीक्ष्य पैतृकधन विभागः कार्य्यः नवश्राद्धानन्तरमन्तरा तद्धनं न विभजनीयं नापि-स्त्रीणां विभागः तासामदायादत्वस्य अदायास्तु स्त्रियो मता इत्यादि श्रुतिसिद्धत्वात्, स्त्रीणां मात्रादीनामंशहरत्वमस्ति न दायहारिता अंशोहि भागवचनो न दायवचनः गणद्रव्यादावप्यंशशब्दप्रयोगो-दृश्यते मातुर्दायविभागो न स्वत्वव्यवस्थापकः किन्तु यावदर्थमर्थ-ग्रहणमेव तासां स्वत्वसम्पादकं अंशहरणन्तु निर्द्धनविषयं न मातृ-मात्रविषयं जनन्यस्वधना पुत्रे र्विभागेऽंशं समं हरेदिति स्मृतेः । जनन्यादीनां स्वधनादेव स्वकीयजीवनस्य स्वानुष्ठेयस्य च धन-साध्यकर्म्मणः सिद्धिसम्भवे जनन्यादीनां न भागग्रहणं किन्तु यावदर्थ-न्यूनभागग्रहणं ।

अनूढानां दुहितॄणां विवाहसम्पादनार्थं पुत्रभागानुसारेण भागग्रहणं न पुनर्भ्रातॄणामिव दायहरत्वं एकस्य पुत्रस्य यावानंश स्तच्चतुर्थांशं प्रतिभगिनीभ्यः प्रदाय भगिन्यः संस्कार्य्या एव एकपुत्र स्यत्वे स्ववित्तानुसारेण भगिन्यः संस्कार्य्याः एवं पितुः पौत्री प्रपौ-त्र्यपि संस्कार्य्या एवं पुमपत्यानि संस्कार्य्याणि पितृद्रव्याभावेऽपि पितृजीवने ये पुत्रा असंस्कृता आसंस्तेऽपि स्वस्वधनादेव संस्कार्य्याः अविद्यमाने पित्रर्थे इति वचनात् संस्कारास्तु जातकर्म्माद्या उपनय-नान्ताः विवाहादिसंस्कारस्य तु अनावश्यकत्वात् नैष्ठिकत्वादिपक्षा न्तरदर्शनात् कन्यकानान्तु विवाहान्ताः संस्काराः उपनयन रहिताः पितृधनाभावे स्वार्थादुद्धृत्य कार्य्याः विवाहकाले स्वधृता-लङ्कारादि मातृपरम्परायात मलङ्कारादि च कन्या लभतइति ।

अथानधिकारिणः ।

तदयं संक्षेपः । क्लीवकुष्ठ्युन्मत्त जात्यन्धजड़पतित पातित्यावस्था

अपतितापत्यव्याध्युपघात घ्राणादीन्द्रियमहापराध निमित्तकबन्धु-वहिष्कृताचिकित्सरोग गार्हस्थ्येतराश्रमान्तरगत वर्णक्रमजन्म-क्रमानतिक्रमपरिणीत स्त्रीजात परिणीत सगोत्र स्त्रीजातनियुक्त पुत्रिणाप्तसुत निषिद्धकार्य्यकरत दृष्टादृष्टोपयोगि गुणरहि-तौरसादिपुत्र जीवत्ताड़नादिकृत, मृतश्राद्धादिविमुखरूपपितृद्विषः सर्व्वे दायानधिकारिणः पतिततज्जाताश्रमान्तरगत प्रव्रज्यावसित-वर्ज्याः निरंशका दायग्राहिभिर्भर्त्तव्याः एतेषां पौत्राः प्रपौत्रा अपि उक्तदोषदुष्टा निरंशका अपि भर्त्तव्या भवन्त्येव। एतेषां सुता यावद्विवाहसंस्कृता भर्त्तव्याः स्त्रियश्चाव्यभिचारिण्यः प्रतिकूलाश्च भर्त्तव्या व्यभिचारिण्योनेति।

अथ विभाज्यनिरूपणं।

तदर्थं संक्षेपः।

पैतामहं पैत्रं साधारणधनोपष्टम्भेणोपार्जितं एतत् त्रिविधं धनं विभाज्यं यदि पित्रादीनां धनबाहुल्यं स्यात् स्याच्च तेषामृणं तदा ऋणं परिशोध्य शेषं विभजेरन् अल्पधने ऋणं रिक्थं च विभजे-रन् ऋणं प्रीतिप्रदानञ्चेति वचनात् विभागकाले रिक्थस्य ऋणस्य च अकूटत्वनिर्णयार्थं तद्दक्थं तदृणञ्च कोषाख्येन दिव्येनैव परि-शोध्यं दृश्यमाना विभज्यन्ते कोषं गूढेऽब्रवीद्भृगुरिति वचनात्। क्रियासमूह कर्तृत्वे कोषमेव प्रदापयेदिति कात्यायनीयाच्च।

अथाविभाज्यनिरूपणं।

तत्रायं निष्कर्षः।

परद्रव्योपयोगं विना अविभक्त सम्बन्धिसकाशं विना अन्य-सकाशात् प्राप्तविद्यया यल्लब्धं तदविभक्तैरविभाज्यं विद्याप्राप्तधनं निमित्तभेदेनानेकविधं तत्र वर्गत्यागादिवैचित्र्येण च्युताचरदत्ता-

वर्त्तन्ति प्रहेलिकादिनोपन्यस्ते लब्धमेकं अध्यापनादिनिमित्तं शिष्याल्लब्धं द्वितीयं, आर्त्विज्यकरणात् यजमानाद्दक्षिणादिना लब्धं तृतीयं, उपपातक्यादिकृत प्रश्ननिर्णयात् लब्धं चतुर्थं, अर्थादिकृतसन्दिग्धप्रश्ननिर्णयाल्लब्धं पञ्चमं, सर्व्वेभ्योऽग्रे पूजादिलाभार्थं स्वप्रकृष्टज्ञानविभावनात् लब्धं षष्ठं, जल्पवितण्डादिभेदात् प्राध्ययनात् घटिकाध्ययनात् अन्येभ्योझटित्यध्ययनाल्लब्धं सप्तमं अत्तहृदयज्ञानादिना, विद्याप्रतिज्ञया इन्द्रियदौर्व्वल्यं प्रावल्यम।नसभावज्ञान प्रद्ज्योतिगणनादिना लब्धमष्टमं शिष्यात् गुरुपूजार्थमाप्तं नवमं, ऋत्विक्न्यायेन उपदेष्टृत्वादिना लब्धं दशमं शिल्पेष्वपि विद्याधनविभागरूपो धर्म्मो विज्ञेयः तथा मूल्यात् यद्धनमधिकं लब्धं तथा विद्याधिक्यकृतं यद्विशिष्टपूजादौ लब्धं तथायाज्यसकाशात् शिष्यसकाशात् संस्कारादौ लब्धं, तदेतद्विद्याधनं प्रातिस्विकं ज्ञेयं, अतोऽन्यत् अविभक्तादिपित्रादि द्रव्योपयोगेन यल्लब्धं तद्विभाज्यं। विभाज्यविद्याधनेऽपि अर्जकस्य भागद्वयं अविभक्तानामेकैकांशः, अविभाज्यविद्याधनमपि इच्छया विद्वद्भ्योदद्यात् अनिच्छया नेति इच्छया अविद्वद्भ्यो न दद्यात् दत्तमपि प्रत्याहर्त्तव्यं शौर्य्यधनमविभाज्यं मातृदत्तञ्चाविभाज्यं पितृद्रव्यानुपघातेन यदर्जितं तदविभाज्यं मैत्रादिग्रहणं प्रदर्शनार्थमित्यभिप्रायः।

एवं क्रमायातं द्रव्यं यत् परापहृतं भूव्यतिरिक्तं योऽभ्युद्धरेत्तत्तस्य नान्येषां क्रमादभ्यागतमिति वचनात् भूमेस्तु उद्धृताया स्तुर्य्यांशमुद्धर्त्रे दत्त्वा उद्धारकेण सह शेषं समं सर्व्वे विभजेरन् पूर्व्वनष्टान्तु यो भूमिमिति वचनात् उद्धृतभूम्यादिविभागे कृते अकृते वा यदि कश्चिदंशी तस्यांशमप्राप्य तत्साधारणं भावयति

तदासौ तस्यांशं प्राप्नुयादेव कृते कृते विभागेतु इतिवचनात्। प्रावृतं वस्त्रमविभाज्यं विभागे वस्तुनाशापत्तेः, अतस्तद्विक्रीय मूल्यं विभजनीयं। पत्रारूढ़े ऋणे विभज्यमाने वस्तुनाशेऽधमर्णसकाशात् ऋणमुद्धृत्य तद्विभजनीयं अकृतान्नेन कृतान्नं परिवर्त्त्य विभाज्यं कूपवाप्याद्यम्भः स्वस्वव्यवहारानुसारेण विभाज्यं यथा भोगविलयं न याति एकां दासीं स्वस्वगृहे कर्म्म कारयेत् न तस्या अवयवविभागः बह्व्यश्चेत् समांशतोविभाज्याः दासानां विभागे दास्युक्तप्रकारो विभागो विज्ञेयः इष्टापूर्त्ते अविभाज्ये योगक्षेमसम्पादनार्थं उपासितेश्वरसकाशात् लब्धेऽप्यविभाज्यता तेन तत्कर्म्म सम्पादनीयं, गवां प्रचरणार्था भूमिरविभाज्या यथांशेन गोप्रचारस्तत्र कार्य्यएव, वस्त्रादयोविभाज्या ये इत्यादि वार्हस्पत्यात् याज्योन विभाज्यः तदुत्पन्नलाभो विभजनीयः चेत्त्वाखिलदायादानुमत्या विभजनीयं दायादैर्नाभ्यनुज्ञातं यत्किञ्चित् स्थावरे कृतं तत्सर्व्वमकृतं ज्ञेयं यद्येकोऽपि न मन्यत इति प्रजापतिवचनात् पितृप्रसादलब्धमपि स्थावरमविभाज्यं पितृप्रसादात् सिध्यन्ति वस्त्राण्याभरणानिच स्थावराणि न सिध्यन्ति प्रसादे सति पैतृके इति याज्ञवल्क्यीयात् इति।

## अथ स्त्रीधनं।

विवाहकाले अग्निसन्निधौ स्त्रीभ्यो येन केनापि यद्दीयते तत्स्त्रीधनमेकं, पितुर्गृहात् भर्त्तृगृहं नीयमाना नारी पितृकुलात् यल्लभते तदध्यावाहनिकं द्वितीयं, स्वश्र्वा श्वशुरेण वा प्रीत्या पादवन्दन निमित्तं यद्दत्तं तत् तृतीयं, यदा कदावा भ्राता माता पित्रा वा यद्दत्तं चतुर्थं, अधिकस्त्रीलाभार्थं पूर्व्वस्त्रियै यद्दत्तं यदा

कदा वा मातुलादिबन्धुदत्तं। गृहस्य, उपस्करस्य, वाह्यानां, दोह्यानां, वा आभरणस्य दासादीनां प्रकृतादाने वरसकाशात् यल्लब्धमूल्यं तत् शुल्काभिधं स्त्रीधनं, वस्तुतः स्त्रीधनमनियत-संख्याकं शिल्पादिलब्धं उदासीनसकाशाद्वा यल्लब्धं न तत् स्त्रीधनं भर्त्तृस्वातन्त्र्यात् एतत् द्वयातिरिक्तन्तु स्त्रीधनं दानविक्रयाद्यधि-कारात् स्त्रीस्वत्वास्पदीभूतमपि धनं न स्त्रीधनं किन्तु पारिभाषिकं मिति तत्त्वं ।

## स्त्रीधनकृत्यं ।

भर्त्तृदत्ते सौदायिके च धने स्त्रीणां स्वातन्त्र्यात् भर्त्तृनैर-पेक्ष्येण स्त्री तद्धनस्य दानविक्रयादीन् कर्त्तुमर्हति सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिति वाक्यात् भर्त्तृदत्तेतु भर्त्तरि विद्यमाने न स्वातन्त्र्यं मृते भर्त्तरि स्वातन्त्र्यमस्त्येव वाग्दानप्रभृति पतिगृह प्रवेशाय उत्सवसमाप्तिपर्य्यन्तं पितृकुलात् पतिकुलात् पत्युः पित्रोर्वा सकाशात् स्त्रिया लब्धं सौदायिकपदाभिधेयं स्त्रीधनं मृते भर्त्तर्य्यपि भर्त्तृदत्तस्थावरे न स्त्रियाः स्वातन्त्र्यं अतो भर्त्तृपक्षानुमति-मन्तरेण तस्य दानादीन् कर्त्तुं नार्हति अन्यत्र स्त्रीधनेऽपि स्त्रीणां न स्वातन्त्र्यं पुरुषाणां भर्त्रादीनां सर्व्वत्र स्त्रीधने न स्वातन्त्र्यं न भर्त्ता नैवच सुत इत्यादि वचनात्, यदिहि बलात्कारेण भर्त्रादयः स्त्रीधनमुपभुञ्जते तदा वृद्धिसहितं तद्धनं दण्डञ्च ते दाप्याः अनु-ज्ञाप्य भक्षितं स्त्रीधनं विद्यमानधनोभर्त्ता मूलमात्रं तद्धनं दाप्यो-नवृद्धिसहितं विवाहेन भर्त्तृधने भार्य्याया नित्यं परतन्त्रस्वाम्यं भर्त्तुर्न भार्य्याधने स्वाम्यमित्यवगन्तव्यं । वर्त्तनार्थं पित्रादिदत्ते स्त्रीधने अलङ्कारे उक्तलक्षणे शुल्के च पार्व्वत्यादि प्रीत्यर्थं

व्रतादौ लाभरूप स्त्रीधने च पतिरनापदि भोक्तुं नार्हत्येव स्वामित्वाभावात् आपदितु पतिरेव स्त्रीधनं भोक्तुमर्हति नान्यः, पतिर्नार्हत्यनापदीति विशेषात् आपत्तु धनाभावनिमित्ता दुरपनेया विवक्षिता, दुर्भिक्षे नित्ये नैमित्तिके च धर्म्मकार्य्ये काम्येऽपि शान्तिके ग्रहयज्ञादौ व्याधौ सम्प्रतिरोधके धनदानं विना निवारयितु मशक्ये धनिकाद्यासेधादौ च गृहीतं स्त्रीधनं पतिर्दातुं नार्हति यस्याः सकाशात् पत्या स्त्रीधनं गृहीतं तां न भजते परस्त्रावनानीते तदा प्रीत्या निसृष्टमपि धनं स्त्रियावलादयाह्यं न तेनराज्ञा साभियोज्या, अतिदुष्टा स्त्री, स्वधनमनिसृष्टमपिविनियोक्तुं नार्हति। अपकारक्रियायुक्ता निर्लज्जा चार्थनाशिका, व्यभिचाररताया च स्त्रीधनं नच सार्हति इति वचनात्। भर्त्रा प्रतिश्रुतं धनं भर्त्तरि मृते तत्सुतैरपिदेयं तदभावे तत् सुतैरपि, भर्त्राप्रतिश्रुतं देयमृणवत् स्त्रीधनं सुतैरिति वचनात्। जीवन्तीनाञ्च स्त्रीधनं ये बान्धवा अपहरन्ति तान् चौरदण्डेन राजा दण्डयेत् स्वातन्त्र्येण स्त्रिया धृतं न विभजेरन् इति।

## स्त्रीधनविभागः।

यदन्वाधेयं यच्च प्रीतेन पत्या दत्तं स्त्रीधनं तत् मृतायाः स्त्रिया अनन्तरलक्षणवर्त्तिन्या स्त्रीपुंसप्रजाया अप्रत्ताया: सभर्त्तृकायाश्च यौगपद्येन स्वं भवेत् मिलित्वा ताभि र्विभागः कर्त्तव्य इति तात्पर्य्यं जनन्यां संस्थितायामिति मानवात् भगिन्यो भ्रातृभिः सार्द्धमिति वचनस्य, विधवा नाधिकारिणी, सभर्त्तृका इति वाक्यात् अप्रत्ताभावे प्रत्ताभि र्भगिनीभिः सार्द्धं भ्रातरो विभजेरन् तत्र यदि दुहितृदुहितरः काश्चित् सन्ति ताश्च सुशीला दारिद्र्याद्युपेताः किञ्चिद्दद्यं

लभन्ते, या स्तासां स्युर्दुहितर इति वचनात्, दुहितृदुहितॄणां धनदानन्तु वाचनिकं, इयान् भेदः दुहितॄणां जन्मना तत्र स्वाम्यं, दुहितृदुहितॄणां न तत्स्वाम्यमिति।

समानोपवेशन-प्रत्यासन्नयो र्वधू-वरयो र्विवाहादौ येन केनापि दत्तं स्त्रीधनं यौतकपदाभिधेयं तत् संस्थाप्य मृतायाः स्त्रीधनं कुमार्य्यो विभजेरन् तासामनेकत्वे सर्व्वाः समानतो विभज्य गृह्णीयु रिति अध्यग्न्यध्यावाहनादि स्त्रीधनं कुमारीणां अनपत्यानां निर्द्धनानां दुर्भगानां विधवानाञ्च समसमयएवाधिकारः। एता मातृ-ऋतर्णापाकरणावशिष्टं विभजेरन्नित्यर्थः ईदृग्दुहित्रभावे दुहितृ-दुहितरो गृह्णीयुः ताभ्यस्तदन्वयः इति नारदीयात्। अत्रान्वय-स्त्रीरूपः, तदभावे दौहित्राणामधिकारः, तदभावे सुता अपि मातृऋतर्णं धनञ्च समं विभजेरन् विभजेरन् सुतादति वचनात् पुत्राभावे पौत्रा गृह्णीयुः भिन्नपितृकाणां तेषां समवाये पित्रनुसारेण भागव्यवस्था एवं भिन्नमातृकाणां दौहित्रीणामपि मात्रनुसारेण विभाग कल्पना, प्रतिमातृ वा स्ववर्गेण भागविशेष इति गौतम-स्मरणात् दुहित्रादि पौत्रान्तधनहारिसन्ततीनामभावे ब्राह्मदैवा-र्षगान्धर्व्व प्राजापत्येषु संस्कृतायाः स्त्रीधने भर्त्तुरधिकारः, अप्रजः स्त्रीधनं भर्त्तुरिति याज्ञवल्क्यीयात्, आसुर पैशाच राचस विवाहेषु संस्कृतायास्तु स्त्रीधने मातापित्रोरधिकारः पितृदत्तेतु पितुरेवाधिकारः। एवं पितृव्य मातुलादि बन्धुदत्ते पितृव्यादि सत्त्वे तेषामेवाधिकारः, तदभावे आसुरादि विषयेऽपि भर्त्तुरेवा धिकारः, येन यद्दत्तं अनपत्यायां मृतायां तत्तस्यैवाधिकारः तद भावे भर्त्तुरिति सिद्धं। अनपत्यानां पूर्व्वोक्त शुल्करूपस्त्रीधने सोदर्य्याणामधिकारः तदभावे मातुः, भगिनीशुल्कं सोदर्य्याणा

मिति वचसः, असमाते विवाहेतु मृताया स्त्रीधने वोढुरेवाधिकारः, स्वञ्च शुल्कं वोढ़ इति वचनात्, कन्यायां मृतायां तद्धने सोदराणा मधिकारः, तदभावे मातु स्तदभावे पितुरिति, एतत् पर्य्यन्ताभावे मृताया स्तद्धने भागिनेयस्याधिकारः तदभावे भर्तृभागिनेयस्य तदभावे देवरभ्रातृस्वसृपुत्रयो स्तदभावे भ्रातृपुत्रस्य तदभावे जामातु स्तदभावे देवरस्याधिकारः, पितृदत्तेतु भर्त्रादिषु सत्त्वेपि सपत्नीकन्याया अधिकारः तदभावे तदपत्यानां भर्तृविजातीय स्त्रीधने भर्तृसजातीयस्त्र्यान्तरकन्याया स्तदभावे तत्सन्ततीना-मधिकारः भर्तृसजातीयाया स्त्रियाः सन्तानरहिताया मृताया धनं स्त्र्यान्तरकन्या तत्सन्तति र्वा नापहरेत्, किन्तु ब्राह्मादिषु भर्त्तैव शेषेषु धनदातैव गृह्णीयादिति ।

## अथ मृतपितृकविभागः ।

प्रमीतपितृकाणां प्रमीतपितृपितामहानां विभागकल्पना पितृद्वारेणैव न स्वरूपापेक्षया ततपुत्र। विषमसमाः पितृभागहराः स्मृता इति वचनात्, कस्यचित् मृतस्यैक एवपुत्रः कस्यचिद्द्वौ कस्य-चित्बहवोऽपि पितृभागमात्रहरा भवन्त्येव एवं रीतिः प्रपौत्रेष्वनु-सर्त्तव्या अविभक्ते ऽनुजे प्रेते तत्सुतं रिक्थभागिनमिति स्मरणात् । वृद्धप्रपितामहधनभागनिवृत्तिः । जीवति धनिनि पुत्रपौत्र-प्रपौत्राः प्रनष्टा वृद्धप्रपौत्रस्य विद्यमानस्य न धनभागिता किन्तु तत्र पत्न्यादयो यथासम्भवं धनहरा भवन्त्येव जन्मना स्वामित्वेऽपि एषा व्यवस्था वाचनिकी । पिण्डदातृत्वात् प्रपौत्रस्याधिकारि-तास्त्येव, सममिच्छन्ति पिण्डानां दायार्थस्य विभाजनमिति देवलीयात्, अविभक्तविभक्तानां कुल्यानां वसतां सह भूयो दाय-

विभागः स्या दाचतुर्थान्निवर्त्तते इति देवलवचनान्तराच्च जीवत्-पितृकस्य पित्रा सह पैतामहधनविभागः समानएव पैतामहं समानं स्यादिति द्रव्ये पितामहोपात्ते इति भूर्य्यापितामहोपात्तेति कात्यायन व्यास याज्ञवल्क्यवचनेभ्यः जीवद्विभागे पितामहादि-धनविषये विषमविभागो युगान्तरेऽपि नास्तीति मन्तव्यं, स्वार्जितधनविषये विषमविभागः युगान्तरे कदाचिदस्तीति मन्तव्यं, पैतामहे पितापुत्रयोस्तुल्यं स्वातन्त्र्यं पितृसत्त्वेपुत्रस्य स्वाम्येऽपि स्वातन्त्र्यं नास्तीति पितुरिच्छां विना न तस्य विभागः पैतामहेतु पितुरिच्छां विना ऽपि पुत्रमात्रेच्छया विभागः केन वार्य्यते स्वाम्य-स्वातन्त्र्ययोः सम्भवादिति वर्त्तुलार्थः । यत् परैरपहृतं क्रमायातं पित्रा स्वशक्त्योद्धृतं यच्च शौर्य्यादिना लब्धं तस्य समभागे विषमविभागे च पिता प्रभुः, विषमविभागस्य कलौ नास्ति उक्तवचनात् ।

## अथापुत्रधनाधिकारिसंक्षेपः ।

मुख्यगौण पुत्र पौत्र रहितस्य विभक्तस्य पत्युः स्थावरादिधने सुसंयता आस्तिक्यबुद्धिः यज्ञाधिकारसम्पादकप्रशस्तब्राह्मादि विवाह संस्कृता पत्नी अधिकारिणी स्थावरेणापि सहितं कृत्स्नमंशं प्राप्य स्वाधिकार श्राद्धपूर्त्तादिकं दानादिकञ्च पत्युरात्मनश्च श्रेयःसाधनं कर्म्मजातं प्रतिपन्नच्छलिगाचार्य्यादि पुरःसरं गृहीतधनानुसारेण कुर्य्यात् । यतो अर्द्धोवाएष आत्मनो य ज्जायेति वेदे, पतेदर्द्धं शरीरस्य यस्य भार्य्या सुरां पिबेदितिस्मृतिशास्त्रे, शरीरार्द्धमयीं जायां कोहि हास्यति पण्डित इति लोकाचारे च पत्युः शरीरार्द्धं पत्नी स्मृता आम्नाये स्मृतितन्त्रे इत्यादि वचनात् ।

क्रीता भार्य्या, नाधिकारिणी क्रयक्रीताच या नारीन सा पत्न्यभिधीयते न सा दैवे न सा पैत्रे दासीं तां कवयोविदुरितिस्मृत्यन्तरात्। यद्विभक्ते धनं किञ्चिदाध्यादि विविधः स्मृतः। तज्जाया स्थावरं मुक्त्वा लभेत कुलपालिका इति बृहस्पतिवचनस्वरसेनाविभक्तविषये सहवासिनः सर्व्वे समसमयएव विभजेरन्, दुहितृरहित पत्नीतु स्थावरधने नाधिकारिणी तदन्या स्थावरेप्यधिकारिणी, अन्यथा जङ्गमे स्थावर इति पूर्व्वविरोधात्, वृद्धानाथाद्युपजीवनायदृष्टार्थदाने पत्न्या अधिकार स्तदितर दृष्टार्थदाने नाधिकारः, मृते भर्त्तरि भर्त्रंशं लभेत कुलपालिका यावज्जीवं नहि स्वाम्यं दानाधमनविक्रय इति वचनात् धर्म्मार्थदानेऽधिकारो ऽस्त्येव व्रतोपवास निरता ब्रह्मचर्य्ये व्यवस्थिता धर्म्मदानरता नित्य मपुत्रापि दिवं व्रजेदिति वचनात्, अविभक्त पतिधनन्तु रक्षणभरणासमर्थेषु श्वशुरादिषु पत्नी स्वयमेव पतिधनं गृहीत्वा यावज्जीवमुपभुङ्क्ते, अपुत्रा शयनं भर्त्तुः पालयन्ती व्रते स्थिता, भुञ्जीता मरणात् चान्ता दायादा ऊर्द्धमाप्नुयुरिति कात्यायनीयात्, यावता धनेन क्लृप्तजीवनं धनसाध्यञ्च नित्यनैमित्तिकं कर्म्म काम्यं व्रतादिकं सिध्यति तावद्धनं पत्नी स्वयमेव गृह्णीयात् जीवनमात्रसाधन धनधान्यस्य स्वल्पत्वे विभक्तधने श्वश्राद्यशुश्रूषक पत्नीव्यतिरिक्ता स्त्री चत्वारिंश दाढकपरिमितधान्यं चत्वारिंशत् पणांश्च प्रतिसंवत्सरं लभतएव, विभक्तधने पत्नीव्यतिरिक्ता स्त्री जीवनार्थमुपक्लृप्तं धनधान्यादि मुपभोक्तु मर्हति, तदन्या केवलं चेलपिण्डे लभते नक्लृप्तमंशं। भोक्तुमिच्छति क्लृप्तांशं गुरुशुश्रूषणे रता न कुर्य्यात् पतिशुश्रूषां चेलपिण्डे नियोजयेदिति कात्यायनीयात्, क्लृप्तांशमपहृत्येति शेषः। अपकारक्रियायुक्ता निर्लज्जा चार्थनाशिका

व्यभिचाररतायाश्च स्त्रीधनं नच सार्हति भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात् । रक्षन्ति शय्यां भर्त्तुश्चेदाच्छिन्द्युरितरासु च । इतरासु व्यभिचाररतासु अशनाच्छादनोपकल्पितधान्यवस्त्रमन्यद्द्रव्यं आच्छिन्द्युरपहरेयुरित्यर्थः । पतितास्वपि एवंविधिर्विज्ञेयः तासामपि ग्रासाच्छादनं देयं, ताश्च गृहान्तिके वासयेयुः या पुनः शङ्कित व्यभिचारा विभक्तविषयेऽपि तस्याः पत्नीत्वेऽपि पत्यंशो नदेयः केवलं ग्रासाच्छादनमात्रभागिनी सा कार्य्या विधवायौवनस्था चेन्नारी भवति कर्कशा आयुषः क्षपणार्थन्तु दातव्यं स्त्रीधनं तदेति हारीतात् । विभक्तासंसृष्टपतिधनं बह्व्यः पत्न्यः समं विभज्य गृह्णीयुरेव, स्त्रीधनं ये प्रतिबध्नन्ति ते राज्ञा दण्ड्या इति पत्न्यधिकारः ।

अथ दुहितुरधिकारः । विभक्तविषये पत्न्या ऊर्द्ध्वं सवर्णत्व सवर्णकर्त्तृकोढत्व भर्त्तृशुश्रूषणसाध्वीत्व चतुष्टयादिविशेषणोपेत प्रतिष्ठितानूढानां समवाये अनूढा दुहितैव पितृधनं गृह्णाति तस्याः पित्रा भर्त्तव्यत्वात्. तदभावे प्रतिष्ठिता तस्याः भर्त्रा-भर्त्तव्यत्वेऽपि भर्त्तुर्भरणासामर्थ्येनाप्रतिष्ठितत्वात् तदभावे सवर्ण-त्वादिविशेषणोपेता प्रतिष्ठिता तस्याः प्रतिष्ठितत्वेऽपि भरण-योग्यत्वात् । संसृष्टविषयेतु केवलं ग्रासाच्छादनभागिनीसा, कार्य्या तदभावे दौहित्रः तत्कोटिकत्वात् तदभावे अपुत्रधनं पिता गृह्णीयात् तदभावे माता मात्रभावे सोदरभ्राता गृह्णी-यात् तस्यैकमातृजत्वेनासन्नतरत्वात् तदभावे भिन्नोदर भ्राता गृह्णीयात् पितरौ भ्रातरस्तथेतिवचनात् भिन्नोदराणामपि ग्रहणात् विभक्तसंस्थितविषयेतु पुत्रादिदौहित्राणामभावे पिता गृह्णीयात् तदभावे जननी तदभावे पितासहीति

विशेषः। मातुरनुज्ञायां मातुः पूर्व्वं भ्राता गृह्णीयात् मनुवचनात् संसृष्टविषयेतु प्रथमं भ्राता तदभावे पिता तदभावे मातेति विशेषः शङ्खवचनात्। तदभावे सोदरभ्रातृसुत स्तदभावे वैमात्रेय भ्रातृसुतः तदभावे पितामहसुतः तस्याप्यभावे तत्सुत स्तदभावे प्रपितामहसुत स्तस्याप्यभावे तत्सुत स्तदभावे वृद्धप्रपितामहसुत स्तदभावे तत्सुत इत्येव माचतुर्द्दशादवगन्तव्यः। तदभावे बन्धवो धनभाजः। बन्धवश्च आत्मपितृस्वसुः पुत्राः आत्ममातृस्वसुः सुताः आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः। पितुः पितुःस्वसुः पुत्राः पितुर्म्मातुःस्वसुः सुताः पितुर्म्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः। मातुर्म्मातुःस्वसुः पुत्राः मातुर्म्मातुःस्वसुःसुताः मातुर्म्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः। बन्धूनामभावे आचार्य्य स्तदभावे शिष्यः तदभावे सब्रह्मचारी सब्रह्मचार्य्यभावे त्रैवेद्याः शुचयो दान्ता ब्राह्मणा धनभाजः। तादृशब्राह्मणाभावे सामान्यब्राह्मणा धनभाजः ब्राह्मणधनं न कदाचिद्राजा गृह्णीयात् अहार्य्यं ब्राह्मणद्रव्यमिति वचनात् शूद्रस्यैकोदकाभावे राजा धनमवाप्नुयात् आचार्य्यस्याप्यभावेतु तथा क्षत्रियवैश्ययोरिति शूद्रस्यैकोदकाभावे राजा, क्षत्रियवैश्ययोस्तु आचार्य्याभावे राजेति विशेषः। धनभागित्वानर्हाणां स्त्रीणां ग्रासाच्छादनं राज्ञा देयं।

## अथ संसृष्टधनविभागः।

यः पुत्रादिः पित्रादिना सह विभक्तः सन् पुनः प्रीत्यादिर्निमित्तेन विभक्तेनैव येन पित्रादिना सहवासमापन्नः सतेन संसृष्ट उच्यते संसृष्टित्वं नयेन केनापि पितृव्य पुत्रादिना परिगणना-

नयैक्यात् पुरुषाणां संसर्गमात्रं न संसर्गः किन्तु धनद्वारेणेति संसर्गे ज्येष्ठत्वनिबन्धनो विषमविभागो नास्ति संसर्गसमये यदीयं यावद्धनं संसृष्टं तदनुसारेण संसृष्टधनविभागः कार्य्यः नतु वचनार्थापरिज्ञानात् समानभाग व्यवस्था. समस्तत्र विभागः स्यादिति समभागविधानबलात् विषमविभाग निषेधे सिद्धे पुनर्ज्येष्ठं तत्र न विद्यत इति ज्येष्ठत्व निबन्धनएव न विषमभागनिषेधः किन्तु बह्वल्पधंन संसर्गनिमित्तकभाग वैषम्यमस्तीति प्रतीयते धनस्येदन्तापादनाय विभागः संसर्गस्तु इदन्तापनोदनायेति संसृष्टानां मध्ये यदि कश्चित् संसृष्टधनानाश्रयेणापि विद्याशौर्य्यादिना अधिकमुपार्जयति तत्रोपार्जको ऽर्जितधनात् द्व्यंशभाक् शेषाः समांशिनएव संसृष्टानान्तु यः कश्चिदित्यादिवचनात् संसृष्टानां मध्ये पुनर्व्विभागकरणात् प्राक् प्रमीतस्य पुत्रादिः प्रमीत पितृकाणान्तु पितृतोभागकल्पनेति रीत्याविभागः कार्य्यः संसृष्टानां मध्ये कस्यचित् प्रमीतस्य भागोननुप्यते पृथगुद्धरणीयः प्रथम विभागेनेयत्तायाः कृतत्वात् सचभागः सोदरभ्रातॄणामेव भवति नचविभक्तधनवत् पत्नी दुहितृन्यायः यदा कश्चित् प्रमीयेत प्रव्रजेद्वाकथञ्चन नलुप्यते तस्य भागः सोदरस्य इति वचनात् किन्तु मृतस्य पत्न्याभरणं यावज्जीवं अनूढा दुहितुः परिनयनं यावत् भरणं कर्त्तव्यं भरणञ्चास्य कुर्व्वीरन्निति नारदीयात् यातस्य दुहितातस्याः पित्र्यं शोभरणमत इति वचनात् सोदराणां मध्ये केचित् संसृष्टाः केचिच्चासंसृष्टा स्तत्र संसृष्टाएव सोदरा विभजेरन् नासंसृष्टाः संसृष्टानान्तु योभागस्तेषामेव सद्व्यते इति वाक्यात्। यत्तु असंसृष्टाः सर्व्वे सोदराः संसृष्टा वैमात्रेया स्तत्र सोदराएवा संसृष्टाअपि विभजेरन् असंसृष्टापि चादद्यात् सोदर्य्योनान्य मातृज इति याज्ञवल्क्यो

तस्मात् अस्वाम्यंहि भवेदेषां निर्दोषे पितरि स्थित इति धर्म्म-
शास्त्रादस्वाम्ये सिद्धे यद्यपि पश्चादधिगतं तैरिति शङ्खवचनस्यैवा-
न्यथा व्याख्या न्याय्या। अत्रोच्यते न ब्रूमो यथेष्टविनियोज्यं
स्वमिति किन्तु यथेष्टविनियोगार्हं स्वमिति ब्रूमहे। ननु शास्त्रेण
गुरुभृत्यादेर्भरणादौ विनियोगनियमात् यथा यथेष्टविनियोज्यत्वं
दुर्निरूपं तथा यथेष्टविनियोगार्हत्वमपि यथेष्टविनियोगाभावादेव
दुर्निरूपं, नैवं यथेष्टविनियोगाभावेऽपि यद्येनार्ज्जितं तत्तस्य
यथेष्टविनियोगार्हमित्येवं निरूप्यते। तथाच न्यायविवेके भव-
नाथेनैव निरूपितं तच्च तस्य तदर्हं यद्येनार्ज्जितमिति ग्रन्थेन,
अस्यायमर्थः। यद्वस्तु येन पुरुषेणार्ज्जितं तद्वस्तु तस्य पुरुषस्य
तदर्हं यथेष्टविनियोगार्हमिति स्वत्वनिरूपणवद्यथेष्टविनि-
योगार्हत्वनिरूपणञ्चास्मन्मते सुशक्यमिति शब्दार्थः। नन्वेवं
चौरस्य चौर्य्यार्जितं यथेष्टविनियोगार्हं स्यादित्याशङ्क्याह
एव, लौकिकमिदञ्चार्जनं जन्मादीति। जन्मक्रयसंविभाग-
परिग्रहाधिगमाद्येव अनिदं प्रथमलोकसिद्धमर्जनमेव स्वत्वापादकं
पुनश्चौर्य्यादिकमित्यर्थः। अतिप्रसङ्गपरिहारोऽपि सुशक्य
इति च शब्दार्थः। नन्विदमर्जनमनिदं प्रथमलोकसिद्धमिद मित्यत्र
किं नियामकमित्याशङ्क्याह स एव, अतएवानिदं प्रथमलोक-
विषय इत्यव्यवस्थितनिबन्धनार्थ्या स्मृतिः, व्याकरणादिस्मृतिवदिति।

यतएवानिदं प्रथमलोकसिद्धार्जनमेव स्वत्वापादकं ततश्च
देव लौकिकवैदिकस्वव्यवहारसिद्ध्यर्थ मवश्यं ज्ञेयम् अतएवानिदं
प्रथमलोकधीगोचरतया व्यवस्थितार्ज्जनानां स्वग्रन्थे निबन्धनार्था
स्मृतिः स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु, ब्राह्मण-
स्याधिकं लब्धं क्षत्रियस्य विजितं निर्द्दिष्टं वैश्यशूद्रयो रित्यादिका

साधुशब्दनिबन्धनार्थव्याकरणस्मृतिवत् कृतेत्यर्थः। रिक्थं रिक्थार्ज्जनं, पित्रादिधने स्वामित्वापादकं पुत्रादिजन्मेति यावत् तथाच पैतृकधनस्वाम्यहेतुत्वेनोक्तं गौतमेन उत्पत्त्यैवार्थं स्वामित्वात् लभत इत्याचार्य्या इति। उत्पत्त्यैव मातृगर्भे शरीरोत्पत्त्यैवेत्यर्थः। क्रयः प्रसिद्धः, संविभागः पित्रादिधने विशेषनिष्ठस्वामित्वसम्पादको विभागः। परिग्रहः काननाधिगतजलतृणकाष्ठादेरन्येनास्वीकृतस्य स्वीकारः। अधिगमो निध्यादेरुपलब्धिः। एतेषु निमित्तेषु सत्सु, पुत्रादिः क्रेता संविभक्ता परिग्रहीता अधिगन्ता च यथाक्रमेण पित्रादिधनस्य क्रीतस्य संविभक्तांशस्य परिगृहीतस्य-अधिगतस्यच स्वामी भवति। तथा लब्धं परिगृहीतं ब्राह्मणस्याधिकं प्रातिस्विकमर्ज्जितम्। एवं क्षत्रियस्य विजितं विजयलब्धम्। एवं, वैश्यस्य निर्द्दिष्टं कृष्यादौ भृतिरूपेण लब्धम्। शूद्रस्यापि निर्द्दिष्टं द्विजशुश्रूषादौ भृतिरूपेण लब्धं प्रातिस्विकमर्ज्जितमित्येव मर्जननिबन्धनाया गौतमस्मृते रर्थो विज्ञेयः। एवञ्च यत् संग्रहकारेणोक्तं वर्त्तते यस्य यद्धस्ते इत्यादिना, यच्च धारेश्वरसूरिणा प्रपञ्चितं तत् सर्व्वमपास्तं वेदितव्यम्। ततस्त्वास्वाम्यं हि भवेदेषां निर्द्दोषे पितरि स्थित इति वचनस्यैव शङ्खवचनविरोधपरिहारो युक्त एवेत्यलमतिवक्तृना।

प्रकृतमुच्यते। निर्द्दोषग्रहणात् पितरि सदोषे स्थितेऽपि सति पुत्राणां न तत्पारतन्त्र्यमिति दर्शयति। तेन पितरि स्थिते व्यसनित्वादिदोषे सत्यर्थादानविसर्गादौ ज्येष्ठस्य स्वातन्त्र्यादनुज्ञायाञ्च ज्येष्ठाधीनत्वमवगन्तव्यम्। अतएव शङ्खलिखिताभ्यामुक्तम्। पितर्य्यशक्ते कुटुम्बव्यवहाराञ् ज्येष्ठः प्रतिकुर्य्यादनन्तरो वा कार्य्यज्ञस्तदनुमतेनेति, तदनुमतेन ज्येष्ठानुमतेन तदानीं तस्यैव स्वातन्त्र्यात्

स्यात्। यदांशिषु सोदराभावः भिन्नोदराः केचित् संसृष्टाः, केचिदसंसृष्टा स्तदा संसृष्टा भिन्नोदरा विभजेरन्। स्थावरेतदि-तर धनसद्भावे संसृष्टा असोदरा असंसृष्ट सोदरा भगिन्यश्च विभज्य गृह्णीयुः। संसृष्टा भिन्नोदरा भ्रातरस्तु गूढ़धनं जङ्गमञ्च विभजेयुः असंसृष्टाः सोदरभ्रातृभगिन्यस्तु गृहं क्षेत्रं यथांशतो गृह्णीयुः केवलस्थावरसद्भावविषयेतु असंसृष्टा अपि सोदरा विभजेरन् न संसृष्टा अपि भिन्नोदराः। अन्तर्हितञ्च यत् द्रव्यं संसृष्टानाञ्च तद्भवेत्, भूमिं गृहं त्वसंसृष्टा विभजेयु र्यथांशत इति प्रजापतिवच-नात्, एषां ज्येष्ठः कनिष्ठोवा हीयेतांशप्रदानतः म्रियेतान्यतरोवापि तस्य भागोन लुप्यते। सोदर्य्या विभजेयु स्तं समेत्य सहिताः समं भ्रातरो येच संसृष्टा भगिन्यश्च सनाभय इति मानवात्। यदा संसृष्ट-भिन्नोदरो नास्ति संसृष्टः पिता पितृव्योवा विद्यते तदा संसृष्टः पिता गृह्णीयात्, तदभावे पितृव्यः, संसृष्टिनि प्रेते संसृष्टो ऋक्थभागिति गौतमीयात्, यदा तु संसृष्टः पिता पितृव्यो नास्ति तदा असंसृष्टो भिन्नोदर भ्राता गृह्णीयात्, तदभावे त्वसंसृष्टः पिता, तदभावे माता, तदभावे पत्नी, तथाच शङ्खः स्वर्य्यातस्य त्वपुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां ज्येष्ठा वा पत्नीति। संसृष्टापुत्रस्य भ्रातृ मातृ व्यतिरिक्ताः, सपिण्डा भ्रातुष्पुत्रादयः सन्ति, अपुत्रधनेन सह स्वपित्रादीनां तदूर्द्धं तत्पत्नीभिः सह यथांशतो विभजेयुः, भ्रातुष्पुत्राणां भ्रात्रंशः भ्रातृभार्य्याणां सत्रंश इत्येव मंशादिक्रमेण विभजेयुः, पत्नीनामभावे संसृष्टापुत्रधनं तद्भगिनी लभेत तथाच वृहस्पतिः या तस्य भगिनी सातु ततोंशं लब्धु मर्हतीत्यादिना भगिन्यभावे संसृष्टाः सपिण्डा विभजेयुः, अनन्तरं सपिण्डाद्यस्तस्य तस्येति मानवात्, सपिण्डाभावे विभक्त संस्थित

द्रव्यविभागक्रमेण संसृष्टापुत्रधनं सकुल्यसमानोदकादयो गृह्णन्तीति, ते चाधिकारिक्रमे विभक्तसंस्थितधनविभाग संक्षेपे व्यक्ताएव द्रष्टव्य इति संसृष्ट धनविभागक्रमः ।

अथ विभक्तजविभागः ।

विस्पष्टगर्भायां पितृभार्य्यायां सत्यां ये पुत्राः विभक्ताः पश्चादुत्पन्नस्य पुत्रांशप्रविष्टं तद्भागमाहृत्य दद्युः पिता न दद्यात् पिता तु तस्य व्यवहारप्राप्ति पर्य्यन्तं तेन सह वसेत् । पितृविभक्ता विभागानन्तरोत्पन्नस्य भागं दद्युरिति गौतमीयात्, मृते पितरि पित्र्यंशं विभक्तजो लभेतैव विभक्तजः पित्र्यमेवेति गौतमीयात्, विभागानन्तरं ये गर्भस्था भूत्वा जातास्ते पितृभागं लभेयुरेव, पुत्रैः सह विभक्तेन पित्रा यत् स्वयमर्जितं तद्विभक्तजस्यैव न विभक्तानां पुत्राणां, विभक्तेन सह संसृष्टेन पित्रा यदृणं कृतं, यद्द्रव्यमाधीकृत्य गृहीतं यच्च दातु मङ्गीकृतं तत्सर्व्वं विभक्तजेन समाधेयं, विभक्तजेन सहवासमापन्ने पितरि मृते तेन संसृष्टा विभक्तजाश्च विभजेरन् । संसृष्टा स्तेन वा ये स्युर्व्विभजेत स तैः सहेति मनुवचनात् पितुरूर्द्ध्वं अविस्पष्टगर्भायां पितृभार्य्यायां विभक्तेषु पुत्रेषु यः सुतो जायते स सर्व्वस्मात् पितृधनात् ततसमांशभागी भवति अथवा दृश्यमान गृहोपस्करवाह्य दोह्याभरणभृत्यादि धनस्य सकाशादुपचयव्ययाभ्या मवधारितेयत्ताकादिभक्ता दुद्धृतो भाग स्तस्य भवति, यत्र पुनः सर्व्वसहवासिनिवासमुत्सृज्य दूरदेशनिवासिनः शेषैः सर्व्वस्मिन् धने विभक्ते आगमनं तस्यार्थानुसारेण तस्य सद्भावज्ञानदोषात् भागो देयः, अतिदीर्घकालप्रोषितस्य सद्भावाज्ञानेनेतरैः कृते विभागे आगतः पौत्रादिः क्रमायातधनस्यांशं प्राप्नुयात्

तृतीयः पञ्चमः सप्तमोवा वाशब्दोऽनुक्तसमुच्चायकः अस्मत्कुलेऽयममुको जातस्तस्यायं वंश्य इत्यादिना परिज्ञातएव लभेत नान्यथा, सप्तमादूर्द्ध्वमपि कश्चित् विभक्तागतः मौलैः समन्ताद्वासिभिरात्मज्ञापनपूर्व्वकं क्रमायातं न सर्व्वं धनं लभेत किन्तु भूमात्रमिति ।

### अथ लुप्तविभागः ।

सर्व्वैः भ्रातृभिः यथाविधि पैतृके धने विभक्ते तदानीमुत्तमर्णस्य प्रवासादिना निक्षेपधारिणश्च विदेशस्थत्वादिनाच निक्षिप्ते द्रव्ये अज्ञाते, विभागानन्तर मुत्तमर्णस्या गमनेन ऋणं निक्षेपधारकस्यागमनेन निक्षिप्तञ्च यदि दृश्यते, तदा ऋणं निक्षिप्तञ्च समं विभजेरन् न पूर्व्ववद्वृद्ध्याद्दिनिवन्धनेन विषमभागतास्तीति विज्ञेयं। एवं विभागकाले केनचिद्वञ्चकेन परकीयमिति बुद्ध्युत्पादनात् प्रच्छादितं विभागानन्तरकाले स्वकीयत्वेन तदेव ज्ञातञ्चेत् तदा तद्द्रव्यं सर्व्वैः समं विभजेयुरेव, तत्रापि स विभागो यदि तत्पित्रा न प्राप्त स्तदा पितुरभावे तत्पुत्राः पौत्रावा लभन्ते, एवं सहवासिषु केनचिद्धनमपहृतं पश्चाद्दृष्टञ्चेत् तदा तत् समं विभजेयु नापहर्त्तु र्दण्डो नांशादानञ्च मन्तव्यं, अपहृतविभागवत् दुर्व्विभक्तमपि पुनर्व्विभजेयुः, दुर्व्विभक्तवत् अन्येनोदासीनेनापहृतं नष्टं केनापि प्रकारेण लब्धं चेत्तदपि समं विभजेयुः, एवं विभागादूर्द्ध्वं साधारणद्रव्यदर्शनेऽपि पुरुषाणां अविभक्तत्व शङ्का न कार्य्या पूर्व्वमेव विभक्तत्वं सम्पन्नमेव, यदि विभक्तैर्व्विभक्तद्रव्येषु यथेष्टविनियोगकरणात् प्रागेव सामान्यद्रव्यं दृश्यते तत्र सर्व्वधनविभागः कार्य्य एव, पुनर्व्विभागविधानफलमेतत् पश्चाद्दृष्टांशेष्युद्धारभागो स्तीति प्रतीत्यर्थं ।

विभक्तकृत्यं ।

यदि एकस्माज्जाता विभिन्नमातृका बहवो विभक्ताः परस्परानुमतिं विना धनसाध्याग्निहोत्रादि कर्मकारिणः स्युः तथा वित्तव्ययायत्त क्रियाकारिणो भवेयुः भिन्नभाण्डादिद्रव्योपपन्नाः स्युः एकैकक्रियमाणेषु भ्रातरो नचेत् सम्मता सदा ताननादृत्य स्वकार्य्यं कुर्य्युः तथा ते विभक्ता यदि स्वभागान् कस्मैचित् दद्युः कस्यचित् समीपे विक्रीणीयु स्तत्सर्व्वं यथेष्टं कुर्य्युः यतस्ते विभक्ताः स्वधने स्वतन्त्रस्वामिनः। यत्र स्थावरं समतया भागं दुष्करं मत्वा तदा तदुपस्वत्वं विभज्य काले ग्रहीष्याम इत्यभिसन्धिना तदितर धनविभागतो दायादा विभक्ता भवन्ति तादृक्स्थावरस्य दानबन्धकविक्रयणादौ एकस्यानीशता विभक्तधने ईशतास्त्येव। तदुपस्वत्वविक्रयणादावीशता भवत्येव। विभक्ता अविभक्ता वा इत्यस्यार्थः॥

विभागसन्देह निर्णयसंक्षेपः।

नावयोर्व्विभागः सर्व्वस्मादविभाज्यात् नावयोर्व्विभाग इति विभागस्वरूप विभागधर्म्मापलापादिना सन्देहे ज्ञात्यादि साक्षिभिर्व्विभागपत्रेण पृथक् गृहक्षेत्रैः पृथक् पृथक् वैश्वदेव भिक्षादानातिथिपूजाधर्म्मप्रवर्त्तनेनच विभागनिर्णयो भवति अविभक्तानामेकमेव वैश्वदेवादिप्रवर्त्तनं विभागं विना तत्कार्य्यमेकैकस्य न भवति। एकपाकेन वसतामिति वचनात्। एको ऋणादिकं करोति अपरस्तत्र साक्षी भवति परस्परं वा साक्षी भवति एकः कस्माचित् किञ्चिद्धनं दत्त्वा गृह्णाति अपरस्तत्र प्रतिभू र्भवति परस्परं वा दानग्रहणादिकं करोति एकैकक्रिया विभागव्यञ्जिका

अविभक्तेषु एकैकक्रियमाण ग्रहणादि निषेधात् अदानपक्षे द्रव्य-व्ययावश्यम्भावात् भ्रातृणामथ दम्पत्योरित्यादि याज्ञवल्कीयात् एकस्माद्दृणादिकं करोति एकस्मात् किञ्चित् क्रीत्वा अन्यस्मिन् विक्रीणीते एषा क्रिया विभक्तानां भवति नाविभक्तानां विभागस्य दृष्टार्थत्वात् श्रेष्ठसाक्ष्यादि निर्णायकप्रमाणाभावे विभागानुमानं भोगेनैव भवति, यथा साहसस्य वैरानुबन्धोभावकः, यथावा स्थावरस्याविच्छेदेनोपभोगो भावकः, यदि भ्रातरः क्रमाद्दश-वर्षाणि पृथक् वसेयुः पृथक्धर्म्मा भवेयुः पृथक्क्रिया भवेयुः तदा तेषां विभक्तत्वानुमानं भवत्येव, वसेयुर्दश वर्षाणि पृथक्धर्म्माः पृथक् क्रियाः भ्रातरस्तेऽपि विज्ञेया विभक्ताः पैटकाद्धनादिति कात्याय-नीयात्, भूमेः क्रमाद्विंशतिवर्षोपभोगेन धनस्य दशवर्षोपभोगेन विभक्ता ज्ञातव्याः विंशतिवर्षादर्व्वाक् दशवर्षादर्व्वाक् वा प्रागुक्त-युक्तिभिर्व्विभागनिर्णयः। युक्तिषु विभागनिर्णयासमर्थासु शपथै र्निर्णयो न भवेत् तत्र पुनर्व्विभाग एव शास्त्रार्थः, विभागे यत्र सन्देहो दायादानां परस्परं पुनर्व्विभागः कर्त्तव्यः पृथक्स्थान-स्थितैरपीति मनुवचनात्, सन्देहाभावे विभागो न परावर्त्तनीय एवेति, सकृदंशो निपतति सकृत् कन्या प्रदीयत इति मनुवचना-दिति।

दुर्लेखराहुणा ग्रस्ता चन्द्रिका न प्रकाशते।
तस्माद्विमोचिता यत्नात् चन्द्रिका चन्द्रिकायते॥

येनाधारि नरेन्द्रदत्त विलसत् सर्कारसंज्ञोच्चकै
र्येनाकारि यशोव्रजै र्निजकुलं स्वच्छं स्वतो निर्म्मलं।
श्रीमत् केशव भारतीय कुलभूः सच्छ्रोत्रियः श्रोत्रियः
सोऽयं श्री हरचन्द्र आविरभवत् कीर्त्त्या मृतो जीवति॥

श्री श्यामाचरणस्ततः समुदयं लेभे कुलोद्दीपको
विद्वान् सज्जनरञ्जनोऽतियशसा, योऽपूरयत् काश्यपिं।
उच्चैः कर्म्मपदे नियुक्तमकरोत् यं प्राड्विवाकाधिपो
जीव्यादर्षशतं स चात्मजधनै र्युक्तो नृणामग्रणीः॥

साहाय्याश्रयणेन तस्य सुधियः संशोधितेयं मया
यत्नाधिक्यवता सतामभिमता मुद्रीयते चन्द्रिका।
चन्द्राङ्काश्वशशाङ्कमानगणिते शाके सहस्याख्यके
मासे, वाणमितांशके शशधरे सा पूर्णतामागता॥

—ssss—